१ गीतं सरस्वती विद्या भोगिनी नन्दनो धरा ।
भोगवती च हृदयं ज्ञानं जालन्धरो लवः[१] ॥ ६५ ॥

घ ॥ २५ ॥

घः खड्गी घुर्घुरो घण्टी घण्टीशस्त्रिपुरान्तकः ।
४ वायुः शिवोत्तमः सत्यं[२] किङ्किणी घोरनादकः[३] ॥ ६६ ॥
मरीचिर्वरुणो मेधा कालरूपी च दाम्भिकः ।
लम्बोदरा ज्वालमूलं नन्देशो हननं ध्वनिः ॥ ६७ ॥
त्रैलोक्यविद्या संहर्त्ता कामाख्यमनघामयः ॥ ६८ ॥

ङ ॥ ३० ॥

८ ङः शङ्खी भैरवश्चण्डो बिन्दूत्तंसः शिशुप्रियः ।
एकरुद्रो दत्तनखः खर्परो विषयस्पृहा ॥ ६९ ॥
कान्तिः श्वेताह्वयो धीरो द्विजात्मा ज्वालिनी वियत् ।
मन्त्रशक्तिश्च मदनो विघ्नेशी चात्मनायकः ॥ ७० ॥
१२ एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः ।
शिवयोषा नीलकण्ठः कामेशी च मयांशुकौ ॥ ७१ ॥

च ॥ ३७ ॥

चः पुष्करो हली वाणी चात्मशक्तिः सुदर्शनः ।
चतुर्मुण्डधरो भौमो महिषाचारसम्बिनी ॥ ७२ ॥
१६ एकरूपो रुचिः कूर्मश्चामुण्डा दीर्घबाहुकः[४] ।
वामबाहुर्मूलमाया चतुर्मूर्त्तिस्वरूपिणी ॥ ७३ ॥
दयितश्च द्विनेत्रश्च लक्ष्मीस्त्रितयलोचनः ।
चन्दनं चन्द्रमा दैवश्चेतना वृश्चिको बुधः ॥ ७४ ॥

१ नरः २ सत्या ३ घोरनायकः ४ दीर्घबालुकः

१ देवी कीटमुखीच्छात्मा कौमारी पूर्वफल्गुणी ।
अनङ्गमेखला वायुर्मेदिनी च मूलावती[1] ॥ ७५ ॥

छ ॥ २५ ॥

छ-श्छन्दनं सुषुम्णा च पशुः पशुपतिर्मृतिः ।
४ निर्मलं तरलं वह्निर्भूतमात्रा विलासिनी ॥ ७६ ॥
एकमात्रा च[2] वृषली द्विशिरा वामकूर्परः ।
गोकर्णा लाङ्गली वामः कामकर्त्ता सदाशिवः ॥ ७७ ॥
माता निशाचरः पायुर्विद्युतः स्थितिशब्दकः ॥ ७८ ॥

ज ॥ २५ ॥

८ जः शवो वानरः शूली भोगदा विजया स्थिरा ।
ललदेवो जयो जैता धातकी सुमुखो विभुः ॥ ७९ ॥
लम्बोदरी स्मृतिः शाखा सुप्रभा कर्त्तृका धरा ।
दीर्घबाहू रुचिर्हंसो[3] नन्दी तेजः सुराधिपः ॥ ८० ॥
१२ जवनो वेगितो[4] वामो मानवाख्यः सदात्मकः ।
हनुमारुतेश्वरो वेगी चामोदो मदविह्वलः ॥ ८१ ॥

झ ॥ ३७ ॥

झो झङ्कारी गुहो झञ्झावायुः सत्यः षडुन्नतः ।
अजेशो द्राविणी नादः पाशी जिह्वा जलं स्थितिः ॥८२॥
१६ विराजेन्द्रो धनुर्हस्तः कर्कशो नादजः कुजः ।
दीर्घबाहुर्बलो रूपमाकन्दितः सुचञ्चलः ॥ ८३ ॥
दुर्मुखो नष्ट आत्मा च विकटा कुचमण्डलम् ।
कलहंसप्रिया वामा चाङ्गुलीमध्यपर्वकः ॥ ८४ ॥

१ कुलावती २ एकनेत्रश्च ३ ह्रंसः ४ वेगिता

१ दक्षहासाट्टहासौ च पापा(था)त्मा व्यञ्जनं स्वरः ॥ ८५ ॥

ञ ॥ २४ ॥

ञ-कारो बोधिनी विश्वा कुण्डली म(सु)खदो वियत् ।
कौमारी नागविज्ञानी सव्याङ्गुलनखो वकः ॥ ८६ ॥
४ सर्वेशश्चूर्णिता बुद्धिः[1] स्वर्गात्मा[2] घर्घरध्वनिः ।
धर्मैकपादौ सुमुखी विरजा चन्द्नेश्वरी ॥ ८७ ॥
गायनः पुष्पधन्वा च रागात्मा[3] च वराक्षिणी ॥ ८८ ॥

ट ॥ २८ ॥

ट-ष्टङ्कारः कपाली च सोमजो[4] खेचरो ध्वनिः ।
८ मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नवः ॥ ८९ ॥
दक्षाङ्गकार्द्धचन्द्रौ च जरा भूतिः पुनर्भवः ।
वृहस्पतिर्धनुश्चित्रा प्रमदा[5] विमला कटिः ॥ ९० ॥
राज(जा)गिरिर्महाधनुर्घ्राणात्मा सुमुखो मरुत् ॥ ९१ ॥

ठ ॥ ३१ ॥

१२ ठः शून्यं मञ्जरी बीजं पाणिनी लाङ्गली क्षयः ।
वनजो नन्दनो जिह्वा सुमञ्जुघूर्णनं[6] सुधा ॥ ९२ ॥
वर्त्तुलः कुण्डलं वह्निरमृतं चन्द्रमण्डलः ।
दक्षजानूरुभावौ च देवभक्षो वृहद्धनिः ॥ ९३ ॥
१६ एकपादो विभूतिश्च ललाटं सर्वमित्रकः ।
वृषघ्नो नलिनी विष्णुर्महेशो ग्रामणीः शशी ॥ ९४ ॥

ड ॥ ३४ ॥

डः स्मृतिर्दारुको नन्दिरूपिणी योगिनी प्रियः ।

१ सिद्धिः २ सर्गात्मा ३ वागात्मा ४ सोमेशः + सोमवाः ५ प्रमोदा ६ सुनञ्जो घूर्णकः

१ कौमारी शङ्करस्त्रासस्त्रिवक्त्रो(क्रो) नदको ध्वनिः ॥६५॥
दुरूहो जटिलो(ली) भीमा द्विजिह्वः पृथिवी सती।
कोलगिरिः[1] क्षमा शान्तिर्नाभिः[2] स्वाती च लोचनम् ॥६६

ढ ॥ ३२ ॥

४ ढो ढक्का निर्णयः पूर्वो यज्ञेशश्च नदेश्वरः[3] ।
अर्द्धनारीश्वरस्तोयमीश्वरी त्रिशिखी नवः ॥ ६७ ॥
दक्षपादाङ्गुलेर्मूलं सिद्धिदण्डो विनायकः ।
प्रहासस्त्रिभवा ऋद्धिनिर्गुणो निधनं ध्वनिः ॥ ६८ ॥
८ विघ्नेशः पालिनी त्वक् कधारिणी क्रोड़पुच्छकः ।
एलापुरं त्वगात्मा च विशाखा श्रोर्मनो रतिः ॥ ६९ ॥

ण ॥ २६ ॥

णो निर्गुणो रतिर्ज्ञानं जृ(ज)म्भणः पक्षिवाहनः ।
जया शम्भुर्नरकजित् निष्कला योगिनी प्रियः ॥ १०० ॥
१२ द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधि(ध)नी मता ।
त्रिनेत्रो मानुषी व्योम दक्षपादाङ्गुलेर्न(मु)खम् ।
राघवः शङ्खिनी वीरो नारायणश्च निर्णयः ॥ १०१ ॥

त ॥ ३१ ॥

तः पूतना हरिः(विः) शुद्धः शक्ती शक्तिर्जटी ध्वजा ।
१६ वामस्फिग्वामकट्यौ च कामिनी मध्यकर्णकः ॥ १०२ ॥
आषाढ़ी तण्डतुण्डश्च[4] कामिका पृष्ठपुच्छकः ।
रत्नकश्च(राठः) श्यामसुखी वाराही मकरोऽरुणः(णा) ॥१०३
सुगतोऽर्द्धमुखी(खा) बुद्ध(र्ध्व)जानुश्च क्रोड़पुच्छकः[5] ।

१ कोरगिरिः २ कान्तिर्नाभिः ३ यज्ञेशो धनदेश्वरः ४ आषान्तढान्तचुन्द्रश्च ५ जानुः कोडश्च

१ गन्धो विम्बं(श्वा) मरुच्छत्रश्चानुराधा च सौरकः ॥ १०४॥
जयन्ती पुलको भ्रान्तिरनङ्गमदनातुरा ॥ १०५ ॥

थ ॥ २७ ॥

थः स्थिरामो महाग्रन्थिर्ग्रन्थिग्राहो भयानकः ।
४ शिली शिरसिजो दण्डी भद्रकाली शिलोच्चयः ॥ १०६ ॥
कृष्णो बुद्धिर्विकर्मा(र्णा) च दक्षनासाधिपोऽमरः ।
वरदा भोगदा केशो वामजानू रसो(पो)ऽनलः ॥ १०७ ॥
लोलाप्यु(लो)ज्जयिनी(पूः) गुह्यः शरच्चन्द्रो दिवाकरः ॥१०८

द ॥ ४० ॥

८ दोऽद्रीशो धात(न)किर्धाता दाता दलं कलत्रकम् ।
दीनं ज्ञानञ्च दानञ्च भक्तिराहवनी धरा ॥ १०९ ॥
सुषुम्णा योगिनी सव्यः कुण्डलं वामगुल्फकः ।
कात्यायनी शिवा दुर्गा लक्ष्मना ना त्रिकण्टकी ॥ ११० ॥
१२ स्वस्तिकः कुटिला रूपं कृष्णश्चोमा जितेन्द्रियः ।
धर्मह्रद्वामदेवश्च भ्रमिर्बाहुः सुचञ्चला ॥ १११ ॥
हरिद्रा पूरमद्रिश्च दक्षपाणिस्त्रिरेखकः ॥ ११२ ॥

ध ॥ ३५ ॥

धो धनार्थो(ख्यो) रुचिः स्थाणुः शाश्वतो योगिनीप्रियः ।
१६ मीनेशः शङ्खिनी तोयं नागेशो विश्वपावनी ॥ ११३ ॥
धिषणा धा(ध)रणा(ी) चिन्ता(त्रा) नेत्रयुग्मं प्रियो मतिः ।
पीतवासास्त्रिवर्णा च धाता धर्मप्लवङ्गमः ॥ ११४ ॥
सन्दर्शो मोहनो लज्जा वज्रतुण्डाधरो(रं) धरा ।
२० वामपादाङ्गुलेर्मूलं ज्येष्ठा सुरपुरं भवः ॥ ११५ ॥

१ स्पर्शात्मा दीर्घजङ्घा च धनेशो धनसञ्चयः ॥ ११६ ॥

न ॥ ३६ ॥

नो गर्जिनी क्षमा सौरिर्वारुणी[1] विश्वपावनी ।
मेषश्च सविता नेत्रं दन्तुरो[2] नारदोऽञ्जनः ॥ ११७ ॥
४ ऊर्ध्ववासी[3] द्विरण्डश्च वामपादाङ्गुलेर्मु(र्न)खम् ।
वैनतेयस्तुतिर्वर्त्म तरणिर्बलिरागमः ॥ ११८ ॥
वामनो ज्वालिनी दीर्घो निरीहः सुगतिर्वियत् ।
शब्दात्मा दीर्घघोणा च हस्तिनापुर-मेचकौ ॥ ११९ ॥
८ गिरिनायक-नीलौ च शिवोऽनादिर्महामतिः ॥ १२० ॥

प ॥ ३८ ॥

पः पू(शू)रप्रियता तीक्ष्णा लोहितः पञ्चमी रमा ।
गुह्यकर्त्ता निधिः शेषः कालरात्रिः सुवाहिता ॥ १२१
तपनः पालनः पाता पद्मरेणुर्निरञ्जनः ।
१२ सावित्री पातिनी पानं वीरतत्त्वं[4] धनुर्द्धरः ॥ १२२ ॥
दक्षपार्श्वश्च सेनानीर्मरीचिः पवनः शनिः ।
उड्डीशं[5] जयिनी कुम्भोऽलसो रेखा[6] च मोहकः ॥ १२३ ॥
मूला द्वितीयमिन्द्राणी लोकाक्षी मन आत्मकः[7] ॥ १२४ ॥

फ ॥ ३४ ॥

१६ फः सखी दुर्गिणी धूम्रा वामपार्श्वो जनार्दनः ।
जया पादः शिखा रौद्री फेत्कारः शाखिनीप्रियः ॥ १२५ ॥
उमा विहङ्गमः कालः कुब्जिनी प्रिय-पावकौ ।
प्रलयाग्निर्नीलपादोऽक्षरः पशुपतिः शशी ॥ १२६ ॥

१ वरुणा २ दन्तुरा ३ ऊर्ध्वचामी ४ वीरतन्त्रः ५ उड्डीनं ६ कान्ताऽवसं रेवा ७ मनतात्मनः(कः)

१ फुत्कारो यामिनी व्यक्ता[१] पावनो मोहवर्द्धनः ।
निष्फला वागहङ्कारः प्रयागो[२] ग्रामणीः फलम् ॥ १२७ ॥

ब ॥ ४४ ॥

बोऽवनी भूधरो मार्गो घर्घरी लोचनप्रियः ।
४ प्रचेताः कलसः पक्षी छगलण्डः कपर्द्दिनी ॥ १२८ ॥
पृष्ठवंशोऽभया माता शिखिवाहो युगन्धरः ।
मु(सु)खबिन्दुर्वली घण्टा योद्धा त्रिलोचनप्रियः ॥१२६॥
क्लेदिनी तापिनी भूमिः सुगमिन्द्रो[३] बलिः प्रियः ।
८ सुरभिर्मुख-विष्णू च संहारो वसुधाधिपः ॥ १३० ॥
षष्ठी पुरं च पेटा च मोदको गगनं प्रति ।
पूर्वाषाढ़ा-मध्यलिङ्गे शनिः कुम्भ-तृतीयकौ ॥ १३१ ॥

भ ॥ ३३ ॥

भः क्लिन्ना भ्रमरो भीमो विश्वमूर्त्तिर्निशाह्वयः[४] ।
१२ द्विरण्डो भूषणं मूलं यज्ञसूत्रस्य वाचकः ॥ १३२ ॥
नक्षत्रं भ्रमणा दीप्तिर्व(र्भू)यो भूमिः पयो नभः ।
नाभिर्भद्रं महाबाहुर्विश्वमूर्त्तिर्विभा(तु)ण्डकः[५] ॥ १३३ ॥
प्राणात्मा तापिनी वज्रा[६] विश्वरूपी च चन्द्रिका ।
१६ भीमसेनः सुधासेनः सु(मु)खं माया पुरं हरः ॥ १३४ ॥

म ॥ ३८ ॥

मः काली क्लेशितः कालो महाकालो महान्तकः ।
वैकुण्ठो वसुधा[७] चन्द्रो रविः पुरुषवाचकः ॥ १३५ ॥
कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः ।

१ झञ्झा २ निष्फलो रागश्चङ्गारौ प्रयाणो ३ सुगन्धिश्च ४ भयम् + तवः ५ विमूर्त्तिकः ६ वज्रा ७ वसुधा

जठरश्च क्षमा मानं लक्ष्मीर्मातोग्र-बन्धने ॥ १३६ ॥
त्रिषं शिवो महावीरः शशिपुत्रो[1] जनेश्वरः ।
प्रमत्तः प्रियसू रुद्रः सर्वाङ्गं वह्निमण्डलम् ॥ १३७॥
मातङ्गमालिनी बिन्दुः श्रवणाभं रथो[2] वियत् ॥ १३८ ॥

य ॥ ५० ॥

यो वाणी वसुधा वायुर्विकृतिः पुरुषोत्तमः ।
युगान्तः[3] श्वसनः शीघ्रं धूम्रार्चिः प्राणिसेवकः ॥ १३९ ॥
शङ्खा क्षमो जटी लोला वायुवेगी यशस्करः ।
सङ्कर्षणः चपा बालो हृदयं कपिला प्रभा ॥ १४० ॥
आग्नेयो व्यापकस्त्यागो होमो यानं प्रमा सुखम् ।
चण्डः सर्वेश्वरी धूमश्चामुण्डा सुमुखेश्वरी ॥ १४१ ॥
त्व(वे)गात्मा मलयो माता हंसिनी भृङ्गनायकः ।
चेतना शोषको मीनो धनिष्ठाऽनङ्गवेदिनी ॥ १४२ ॥
मेषः[4] सोमः पङ्क्तिनामा पापहा प्राणसंज्ञकः ॥ १४३ ॥

र ॥ ४४ ॥

रो रक्तः क्रोधिनी रेफः पावकस्तै(स्त्वौ)जसो मतः ।
प्रकाशो दर्शनो दीपो वत कृष्णः[5] परं बली ॥ १४४ ॥
भुजङ्गेशो मतिः सूर्यो धातुरक्तः[6] प्रकाशकः ।
व्यापको रेवती दाम क्रौञ्चांशो[7] वह्निमण्डलम् ॥ १४५ ॥
उग्ररेखा स्थूलदण्डो वेदकण्ठक(प)ला[8] पुरा ।
प्रकृतिः सुगतो[9] ब्रह्मशब्दश्च गायको धनम् ॥ १४६ ॥

१ शशिप्रभा २ मखो ३ युगाभः ४ मेष्ठः + सेष्टः ५ रक्तकृष्णः + रजस्कृष्णा ६ धातुराजः ७ धाने कुल्यंशौ + दासो दक्षांशः ८ वेदकक्षपला ९ छगणो + छगलो

१ श्रीकण्ठ उष्मा हृदयं मुण्डी त्रिपुरसुन्दरी।
सबिन्दुर्योनिजो ज्वाला श्रीशैलो विश्वतोमुखी ॥ १४७ ॥

ल ॥ ३५ ॥

ल-श्चन्द्रः पूतना पृथ्वी माधवः[1] शक्रवाचकः।
४ बलानुजः पिनाकीशो व्यापको मांससंज्ञकः ॥ १४८ ॥
खड्गी नादोऽमृतं[2] देवी लवणं[3] वारुणी पतिः।
शिखा वाणी क्रिया माता भामिनो कामिनीप्रिया ॥१४९॥
ज्ञानिनी[4] वेगिनी नाथः[5] प्रद्युम्नः शोषणो हरिः।
८ विश्वात्म-मन्दौ बलवान्[6] मेरुर्गिरिः कलारसः ॥ १५० ॥

व ॥ २२ ॥

वो बालो वारुणी सूक्ष्मा वरुणो मेदसंज्ञकः।
खड्गीशो ज्वालिनी वक्त्रः[7] कलसं ध्वनिवाचकः ॥ १५१ ॥
उत्कारीशस्तु नीवीको[8] वज्रं स्फिक् सागरः शुचिः।
१२ त्रिधातुः शङ्करः श्रेष्ठो विशेषो यमसादनम् ॥ १५२ ॥

श ॥ ३० ॥

शः सव्यश्च कामरूपी कामरूपो महामतिः।
सौख्यनामा कुमारोऽस्थि श्रीकण्ठो वृषकेतनः ॥ १५३ ॥
वृषघ्नः शयनं शान्तः[9] सुभगा विस्फुलिङ्गिनी।
१६ मृत्युदेवो[10] महालक्ष्मीर्महेन्द्रः कुलकौलिनी ॥ १५४ ॥
बाहुहंसो[11] वियद् वक्त्रं हृदनङ्गाङ्कुशः खलः।
वामोरुः पुण्डरीकात्मा कान्तिः कल्याणवाचकः ॥ १५५ ॥

१ माधवी २ मृडं ३ मरणं ४ ज्वालिनी ५ नादः ६ त्म मन्त्रौ + मन्द्रौ बली वेसः ७ यक्षः + रक्षः कलसं रवि ८ मा वीतो ९ शान्ता १० मृत्युर्देवो ११ बाहुर्हिंसा

ष ॥ ३२ ॥

१ षः श्वेतो वासुदेवश्च पीतं[1] प्रज्ञा विनायकः ।
परमेष्ठी वामबाहुः श्रेष्ठो गर्भविमोचनः ॥ १५६ ॥
लम्बोदरो यमोऽजेशः कामधुक् काम(ल)धूमकः ।
४ सुश्रीरुष्मा वृषो लज्जा मरुद्धृदयः प्रियः शिवः ॥ १५७ ॥
सूर्यात्मा जठरः कोषो मत्ता वक्षोविदारिणी ।
कलकण्ठो मध्यभिन्ना युद्धात्मा खलपूः[2] शिवः ॥ १५८ ॥

स ॥ ३८ ॥

सो हंसः सुयशा[3] विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः ।
८ जगद्बीजं शक्तिनामा सोऽहं[4] वेग(श)वती भृगुः ॥ १५९ ॥
प्रकृतिरीश्वरः शुद्धः प्रभा श्वेतः[5] कुलोज्ज्वलः ।
दक्षपादोऽमृतं ब्राह्मी परमात्मा परोऽक्षरः ॥ १६० ॥
सुरूपश्च[6] गुणेशो गौः कलकण्ठो वृकोदरः ।
१२ प्राणाद्यस्त्रिपुरादेवी[7] लक्ष्मीः सोमो हिरण्यभूः[8] ॥१६१॥
दुर्गोत्तारिणी सम्मोहा जीवो मूर्तिमनोहरः[9] ॥ १६२ ॥

ह ॥ ५१ ॥

हः शिवो गगनं हंसो नागलोकोऽम्बिकापतिः ।
नकुलीशो जगत्प्राणः प्राणेशः कपिलाऽमलः[10] ॥ १६३ ॥
१६ परमात्मात्मजो जीवो यवाकः[11] शान्तिदोऽङ्गनम्[12] ।
मृगोऽभयाऽरुणा स्थाणुः क्रोष्टुः कूपविरावणः[13] ॥ १६४ ॥
लक्ष्मीर्ब्रह्मा हरिः[14] शम्भुः प्राणशक्तिर्ललाटजः[15] ।

---

१ पीता + प्रीता श्रद्धा २ मलपुः ३ छजनो ४ मोहो ५ श्वेता ६ छरूपा च ७ श्च पुरा देवी ८ हिरण्यपुः ९ मनोजवः १० मलः + मतः ११ वराकः १२ अङ्गुलः १३ क्रटकूपविरावणः + कूटकोपरिवारणः १४ मनिहरः + हरिहरः १५ प्राणशङ्किर्ललाटजः

१ स्व(स)कोपवारणः शूली चैतन्यं पादपूरणः ॥ १६५ ॥
महालक्ष्मीः परं नादो मेघनादो हरिर्मनः ।
बिन्दुर्दुर्गा प्रिया देवी मेघः श्यामेश्वरः पुमान् ॥ १६६ ॥
४ दक्षपादः सदा शम्भुः साखोटः सोममण्डलम् ॥ १६७ ॥

ळ ॥ ३३ ॥

ळः पृथ्वी विमला मेघोऽनन्तो हव्यवहः सिता ।
व्यापिनी शिवदा केतुर्जगत् सारतरं हठः ॥ १६८ ॥
ग्लौर्मृड़ानी च वेदार्थसारो[1] नारायणः स्वयम् ।
८ जठरो नकुलिः पीतः[2] शिवेशोऽनङ्गमालिनी ॥ १६९ ॥

क्ष ॥ ३५ ॥

क्षः कोपस्तुम्बुरुः[3] कालो रुक्षः[4] संवर्त्तकः परः[5] ।
नृसिंहो विद्युता माया महातेजा युगान्तकः ॥ १७० ॥
परात्मा क्रोध-संहारौ वनान्तो[6] मेरुवाचकः ।
१२ सर्वाङ्ग[7] सागरः कामः संयोगान्तस्त्रिपूरकः ॥ १७१ ॥
क्षेत्रपालो महाक्षोभो मातृकान्तोऽनल-क्षयौ ।
मुखं कव्यं महानन्ता[8] कालजिह्वा गणेश्वरः ॥ १७२ ॥
छायापुत्रश्च संघातो मलयश्रीर्ललाटकः * ॥ १७३ ॥

---

१ वेदार्थः सारो २ पीता ३ स्तुम्बुकः+स्तुघुकः ४ व्यक्षः ५ पयः ६ वलान्तो+नलान्तः
७ सर्वांगः ८ कव्यवहाऽनन्ता

* ललाटक इत्यनन्तरम् एतत् पद्यपञ्चकं क्वचिदधिकं दृश्यते—

अर्कमाता कला वाणी नादो बिन्दुः सदाशिवः ।
अनुचार्या तुरीया च विश्वमातृकला परा ॥ नादः ॥
नमो हृत् पूजनं न्यासः सन्नतिर्विनतिर्नतिः ।
भक्तिस्तथा मन्त्ररूपं वन्दनन्त्वभिवादनम् ॥ नमः ॥

# एकाक्षरकोषः



१ अ-कारो वासुदेवः स्यादाकारश्च पितामहः ।
पूजायामपि माङ्गल्ये आ-कारः परिकीर्त्तितः ॥ १ ॥
इ-कार उच्यते कामो लक्ष्मी-री-कार उच्यते ।
४ उ-कारः शङ्करः प्रोक्त ऊ-कारश्चापि रक्षणे ॥ २ ॥
ऋ-कारो देवमाता स्याद् ॠ-कारो दनुजप्रसूः ।
ऌ-कारो देवयोनिः स्याल् ॡ-माता सद्भिरुच्यते ॥ ३ ॥
ए-कारः कथितो विष्णु-रैकारश्च महेश्वरः ।
८ ओ-कारस्तु भवेद् ब्रह्मा औ-कारो रुद्र उच्यते ॥ ४ ॥
अं स्याच्च परमं ब्रह्म अः स्याद्देवो महेश्वरः ।
कः प्रजापतिरुद्दिष्टो को वायुरिति शब्दितः ॥ ५ ॥
क-श्चात्मा च समाख्यातः कः प्रकाश उदाहृतः ।
१२ कं शिरो जलमाख्यातं कं सुखञ्च प्रकीर्त्तितम् ॥ ६ ॥

---

स्वाहा परा देवभोज्यं ठद्वयं चन्द्रयुग्मकम् ।
श्रुवो हरिर्देवमाता देवास्यं वह्निसुन्दरी ॥ स्वाहा ॥
शिखा वषट् शिरोमध्यं शक्रमाता हरप्रिया ॥ वषट् ॥
क्रोधाख्योऽहं तनुत्रश्च शस्त्रादौ रिपुसंज्ञकः ॥ हुं ॥
नेत्रयुग्मं तथा वौषट् शक्रदैवतमेव च ॥ वौषट् ॥
अस्त्रादौ फट् छोटिका स्यादङ्गान्तः सुरवाचकः ॥ फट् ॥

पृथिव्यां कुः समाख्याता कुत्सायां कुः प्रकीर्त्तितः ।
ख-मिन्द्रियं समाख्यातं खमाकाशमुदाहृतम् ॥ ७ ॥
खं स्वर्गे च समाख्यातं खं सर्पे च प्रकीर्त्तितम् ।
तथा श्वभ्रे च खं प्राहुः खं शून्ये च प्रकीर्त्तितम् ॥ ८ ॥
गो गणपतिरुद्दिष्टो गो गन्धर्वः प्रकीर्त्तितः ।
गं गीतं गा च गाथा स्याद् गौर्धेनुर्गौः सरस्वती ॥ ९ ॥
गौर्मातापि समुद्दिष्टा पृथिव्यां गौः प्रकीर्त्तिता ।
घो घण्टायां समाख्यातः किङ्किणी घा प्रकीर्त्तिता ॥१० ॥
उपमा घा समाख्याता कुस्वरे घुः प्रकीर्त्तितः ।
हनने घा समाख्याता गन्धने घः प्रकीर्त्तितः ॥ ११ ॥
ङ-कारो भैरवः ख्यातो ङकारो विषये स्मृतः ।
च-कारश्चन्द्रमाः ख्यातस्तस्करश्च प्रकीर्त्तितः ॥ १२ ॥
निर्मलं छं समाख्यातं तरणी छः प्रकीर्त्तितः ।
छेदने छः समाख्यातो विद्वद्भिः शब्दकोविदैः ॥ १३ ॥
वेगिते जः समाख्यातो जघने जः प्रकीर्त्तितः ।
जेता च जः समाख्यातः प्रसिद्धैः शब्दकोविदैः ॥ १४ ॥
झञ्झावाते झ-कारः स्यान्नष्टे झः समुदाहृतः ।
ञ-कारो गायने प्रोक्तो ञकारो घर्घरध्वनौ ॥ १५ ॥
टङ्कारे टः पृथिव्यां टा टो ध्वनौ च प्रकीर्त्तितः ।
ठो महेश्वर आख्यातः शून्ये च ठः प्रकीर्त्तितः ॥ १६ ॥
बृहद्ध्वनौ च ठः प्रोक्तस्तथा चन्द्रस्य मण्डले ।
ड-कारः शङ्करः प्रोक्तस्त्रासध्वन्योः प्रकीर्त्तितः ॥ १७ ॥

ढ-कारः कीर्त्तिता ढक्का निर्गुणे च ध्वनात्त्वपि।
ण-कारः कीर्त्तितो ज्ञाने निर्णयेऽपि प्रकीर्त्तितः ॥ १८ ॥
त-कारः कथितश्चौरः क्रोड़े पुच्छे प्रकीर्त्तितः।
शिलोच्चये थ-कारः स्यात् थकारो भयरक्षणे ॥ १९ ॥
दं कलत्रे समाख्यातं दो दान-च्छेद-धातुषु।
धं धने च धनेशे धो धा धातरि निदर्शितः ॥ २० ॥
धिषणा धीः समाख्याता धूश्च स्याद्‌ भार-चिन्तयोः।
न-कारः सुगते बन्धे नुः स्तुतौ च प्रकीर्त्तितः ॥ २१ ॥
नेता नीश्च समाख्यातस्तरणौ नौः प्रकीर्त्तिता।
(नकारः सौगते बुद्धौ स्तुतौ सूर्ये च कीर्त्तितः ॥ २२ ॥
न-शब्दः स्वागते बन्धौ वृक्षे सूर्ये च कीर्त्तितः।)
पः कुबेरः समाख्यातः पश्चिमे च प्रकीर्त्तितः ॥ २३ ॥
पवने पः समाख्यातः पाः पाने पाश्च पातरि।
कफे वाते फकारः स्यात्तथाह्वाने प्रकीर्त्तितः ॥ २४ ॥
झञ्झावाते फ-कारः स्यादक्षरे च प्रकीर्त्तितः।
कोपे फिश्च समाख्यातस्तथा निष्फलभाषणे ॥ २५ ॥
वक्षःस्थले च बः प्रोक्तो गदायां समुदाहृतः।
नक्षत्रं भं बुधैः प्रोक्तं भ्रमरे भः प्रकीर्त्तितः ॥ २६ ॥
भा दीप्तिरपि भूर्भूमिर्भीर्भयं कथिता बुधैः।
मः शिवश्चन्द्रमा वेधा मा च लक्ष्मीः प्रकीर्त्तिता ॥ २७ ॥
मा च मातरि माने च बन्धने मूः प्रकीर्त्तिता।
यशो यः कथितः शिष्टैर्यो वायुरिति शब्दितः ॥ २८ ॥

४

थाने यातरि यस्त्यागे कथितः शब्दवेदिभिः ।
रः स्यात् कामेऽनिले वह्नौ शब्दे रुः परिकीर्त्तितः ॥ २९ ॥
धने रा रीश्च रो धान्ये रुर्भये च प्रकीर्त्तितः ।
ल इन्द्रे लवणे लः स्यात्लादाने श्लेषणेऽपि लीः ॥ ३० ॥
लः श्लेषे चाशये चैव प्रलये साधनेऽपि लः ।
मानसे वरुणे चैव लकारः सान्त्वनेऽपि च ॥ ३१ ॥
प्रचेता वः समाख्यातः कलसे वः प्रकीर्त्तितः ।
पक्षी च विर्निगदितो गमने विः प्रकीर्त्तितः ॥ ३२ ॥
वदन्ति शं बुधाः श्रेयः शश्च शास्ता निगद्यते ।
शीः शसं शयनं चाहुर्हिंसा शूश्च निगद्यते ॥ ३३ ॥
ष-कारः कीर्त्यते श्रेष्ठे षूश्च गर्भविमोचने ।
उपसर्गे परोक्षे च षकारः परिकीर्त्तितः ॥ ३४ ॥
सोऽपसर्गः समाख्यातः सा तु लक्ष्मीर्निगद्यते ।
सः कोपे करणे सः स्यात्तथा शूलिनि कीर्त्तितः ॥ ३५ ॥
सकारो वानरः प्रोक्तः सकारः सर्व उच्यते ।
सा चैव गौः समाख्याता संसर्गः स प्रकीर्त्तितः ॥ ३६ ॥
हः कोपे धारणेऽपि स्याद् हः शूलिनि समीरितः ।
हिः पद्यपूरणे प्रोक्तो हिः स्याद् हेत्ववधारणे ॥ ३७ ॥
क्षः क्षेत्रे रक्षसि प्रोक्तो नियतं शब्दवेदिभिः ।
क्षिः क्षेत्रे क्षत्ररक्षे च नृसिंहे च प्रकीर्त्तितः ॥ ३८ ॥

इति श्रीपुरुषोत्तमदेवविरचित-
एकाक्षरकोषः समाप्तः

# बीजनिघण्टुः

अथ वक्ष्ये मन्त्रकोषं यदुक्तं भूतडामरे।
क्रमाद्द् बीजविधानञ्च श्रुत्यर्थज्ञानसम्भवम् ॥

श्रीशिव उवाच—

१ अ विद्युज्जिह्वा, आ कालवज्री, इ गर्जिनी,
ई धूम्रभैरवी, उ कालरात्रिः, ऊ विदारी, ऋ महारौद्री,
ॠ भयङ्करी, ऌ संहारिणी, ॡ करालिनी, ए ऊर्ध्वकेशी,
४ ऐ उग्रभैरवी, ओ भीमाक्षी, औ डाकिनी, अं रुद्राकिणी,
अः चण्डिका, क क्रोधीशः, ख वामनः, ग चण्डः,
घ विकारी, ङ उन्मत्तभैरवः, च ज्वालामुखः, छ रक्तदंष्ट्रः
ज असिताङ्गः, झ वड़वामुखः, ञ विद्युन्मुखः, ट महाज्वालः,
८ ठ कपाली, ड भीषणः, ढ रुरुः, ण संहारी, त भैरवः,
थ दण्डी, द बलिभुक्, ध उग्रशूलधृक्, न सिंहनादी,
प कपर्दी, फ करालाग्निः, ब भयङ्करः, भ बहुरूपी,
म महाकालः, य जीवात्मा, र क्षतजोक्षितः, ल बलभेदी,
१२ व रक्तपटः, श चण्डीशः, ष ज्वलनध्वजः, स धूमध्वजः,
ह व्योमवक्त्रः, क्ष त्रैलोक्यग्रसनात्मकः ॥
( नयनश्रोत्रास्यनासाहृत्सु न्यासे दश स्वराः ।)*

---

* ( ) धन्वनीमध्यगतपाठः क्वचिन्न दृश्यते ।

१ विद्युज्जिह्वा कालवक्त्रा महाकालैरलङ्कृता ॥ ॐ ॥
विषबीजं श्रुतिमुखं ध्रुवं हालाहलं प्रिये ( च तत् ) ॥
चण्डीशः क्षतजारूढो धूम्रभैरव्यलङ्कृतः ।
४ नादबिन्दुसमायुक्तो बीजं विष्णुप्रिया मतम् ॥ श्रीँ ॥
क्षतजस्थो व्योमवक्त्रो धूम्रभैरव्यलङ्कृतः ।
नादबिन्दुसमायुक्तो बीजं प्राथमिकं† स्मृतम् ॥ ह्रीँ ॥
क्रोधीशः क्षतजारूढो धूम्रभैरव्यलङ्कृतः ।
८ नादबिन्दुसमायुक्तः पितृभूवासिनी स्मृतः ॥ क्रीं ॥
विदारीयुक्तं व्योमास्यं रुद्राकिण्यलङ्कृतम् ।
कूर्चं कालं क्रोधबीजं जानीहि वीरवन्दिते ॥ हूँ ॥
नादबिन्दुसमायुक्तां समादायोग्रभैरवीम् ।
१२ भौतिकं वाग्भवं बीजं विद्धि सारस्वतं प्रिये ॥ ऐं ॥
प्रलयाग्निर्महाज्वालः ख्यातश्चास्त्रमनुः प्रिये ॥ फट् ॥
क्रोधीशरक्तभीमाद्योऽङ्कुशोऽयं नादबिन्दुमान् ॥ क्रोँ ॥
द्विठः शिरो वह्निजाया स्वाहा ज्वलनवल्लभा ॥ स्वाहा ॥
१६ क्रोधीशो बलभिद् धूम्रभैरवीनादबिन्दुभिः ।
त्रिमूर्त्तिर्मन्मथः कामः बीजं त्रैलोक्यमोहनम् ॥ क्लीँ ॥
व्योमास्यः कालरात्र्याढ्यो वमं बिन्दीन्दुसंयुतः ।
कथितं कवचं बीजं कुलाचारप्रियेऽमले ॥ हुँ ॥
२० व्योमास्यः क्षतजारूढो डाकिनीनादबिन्दुभिः ।
ज्योतिर्मन्त्रः समाख्यातो महापातकनाशनः ॥ ह्रौँ ॥

† माया लज्जाद्वयमिति पाठान्तरम् ।

१ संयुक्तो धूम्रभैरव्या रक्तस्थो बलिभोजनः ।
नादबिन्दुसमायुक्तः किङ्किणीबीजमुत्तमम् ॥ द्रीँ ॥
बहुरूपिणमादाय क्षतजोक्षितसंस्थितम् ।
४ विदार्यालिङ्गितं तद्वद् विशेषार्थो महामनुः ॥ भ्रूँ ॥
धूमध्वजाधः कालाग्निः सोर्ध्वकेशीन्दुबिन्दुभिः ।
युगान्तकारकं बीजं भैरवेण प्रकाशितम् ॥ स्फेँ ॥
संहारिण्याश्रितश्चोर्ध्वकेशिनी तु कपर्द्दिनम् ।
८ नादबिन्दुसमायुक्तं बीजं वैतालिकं स्मृतम् ॥ प्लूँ ॥
सनादबिन्दुं क्रोधीशं गृह्य संहारिणीस्थितम् ।
कम्पिनीबीजमित्युक्तं द्विठेनोक्ता मनोहरी ॥ क्षीँ स्वाहा ॥
कपर्द्दिनं समादाय क्षतजोक्षितसंस्थितम् ।
१२ संयुक्तं धूम्रभैरव्या ध्वाङ्क्षोऽयं नादबिन्दुमान् ॥ प्रीँ ॥
कपालिद्वयमादाय महाकालेन मण्डितम् ।
समासनमिति प्रोक्तं चण्डिकाढ्यं मनोहरम् ॥ ठंठं ठःठः ॥
प्रलयाग्निस्थितो धूमध्वजो गृह्य सबिन्दुमान् ।
१६ संयुक्तो धूम्रभैरव्या स्मृता फेत्कारिणी प्रिये ॥ स्फीं ॥
क्षतजस्थो व्योमवक्त्रो बिन्दुखण्डेन्दुलङ्कृतः ।
खद्योतमिति विख्यातं ग्रासिनी कालरात्रियुक् ॥ हूँ ॥
क्षतजस्थं व्योमवक्त्रं नादबिन्दुसमन्वितम् ।
२० विदारीभूषणं कृत्वा बीजं वैवस्वतात्म(न्त)कम् ॥ हूँ ॥
व्योमवक्त्रो धूमध्वजो वारणः प्रलयाग्निकः ।
ऊर्ध्वकेशी क्षतारूढा बिन्दुचन्द्रार्द्धसंगता ॥

१ बीजमानन्दभैरव्या मूकानन्दकरं परम् ॥ ह्स्ख्फ्रें ॥
अ-कारे भीषणा कीर्त्तिर्विद्युज्जिह्वेति कीर्त्तिता ।
आ-कारे तामसी कालवज्री(जिह्वा) च कालभैरवी ॥
४ इ-कारे गर्जिनी चण्डा विज्ञेया रुद्रभैरवी ।
ई-कारे शूलिनी ख्याता चण्डोग्रा धूम्रभैरवी ॥
उ-कारे कालकूटा(वक्त्रा)ख्या प्रचण्डा चण्डवल्लभा ।
विदार्यू-कारके प्रोक्ता ता(ना)लजङ्घा कपालिनी ॥
८ ऋ-कारे स्यान्महारौद्री ज्वालिनी योगिनीत्यपि ।
ॠ-कारे कालिका प्रोक्ता पितृकाली भयङ्करी ॥
संहारिणी लृ-कारे स्यान्मेघनादोग्रभाषिणी ।
रुद्रचण्डा कालरात्रिः ॡ-कारे च करालिनी ॥
१२ ऊर्ध्वकेशी च चामुण्डा नादिन्ये-कारके स्मृता ।
ऐ-कारे कोटराक्षी च मालिन्युन्मत्तभैरवी ॥
ज्वालिन्यो-कारगा ज्ञेया भीमाक्षी चण्डमालिनी ।
औ-कारे डाकिनी सिंहनादिनी चण्डभैरवी ॥
१६ अक्रूराख्या विदारी च अं-कारे रुद्रा(डा)किणी ।
शेषे कपालिनी याम्या चण्डिका कुण्डलद्वयम् ॥
विसर्गो नादः सकलाः षड्दशोक्ताः स्वरा मताः ॥
क्रोधीशो वारणश्चण्डः शङ्का तून्मत्तभैरवः ।
२० ज्वालामुखो रक्तदंष्ट्रोऽसिताङ्गो बलयामुखः ॥
विद्युन्मुखो महाज्वाली कपाली भीषणो गुरुः ।

१ प्रहारी रौरवो दण्डी बलितोऽप्युग्रशूलधृक् ॥
सिंहनादी कपर्दी च प्रलयाग्निर्भयङ्करः ।
बहुरूपी महाकालः स्थिरात्मा क्षतजोक्षितः ॥
४ बलभेदी रक्तपटश्चण्डीशो ज्वलनध्वजः ।
धूमध्वजो व्योमवक्त्रस्त्रैलोक्यग्रसनात्मकः ॥
( नयनश्रोत्रास्यनासाहस्तु न्यासे दश स्वराः ॥
ध्वजिनीधूम्रभैरव्यावभावे च दृशोः स्मृते ।
८ मूलार्णमुखमादिष्टं हृदयं स्वरशक्तयः ॥
आदिमध्यावसानेषु पूर्वाभावे यथोत्तरम् । )*
कण्ठास्यः कालवक्त्रेण महाकालेन भूषितः ।
तदादिः पञ्चरश्मिश्च सृष्टिस्थितिलयं त्रिधम् ॥ ॐ ॥
१२ शूलिन्या सहितोऽग्निस्थश्चण्डीश इन्दुबिन्दुमान् ।
एतद्विष्णुप्रियाबीजं यन्मान्यं जगतः प्रियम् ॥ श्रीँ ॥
क्षतजस्थो व्योमवक्त्रश्चण्डोग्राबिन्दुभूषितः ।
अद्रिजा रौद्री भूतेशो बीजं प्राथमिकं प्रियम् ॥ ह्रीँ ॥
१६ क्रोधीशो रक्तसंस्थश्च धूम्रभैरव्यलङ्कृतः ।
बिन्द्विन्दुसंयुतो बीजं द्रावणं क्लेदनं स्मृतम् ॥ क्रीँ ॥
व्योमास्यो बिन्दुसंयुक्तस्तालजङ्घाविभूषितः ।
कूर्चं कालो महाकालः क्रोधबीजं निरञ्जनम् ॥ हूँ ॥
२० उन्मत्तभैरवी रुद्रडाकिन्या च विभूषिता ।
नादेनाऽलङ्कृता बीजं वाग्भवं बुद्धिवर्द्धनम् ॥ ऐँ ॥

* ( ) बन्धनीमध्यगतः पाठः क्वचिन्न दृश्यते

१ फड़ित्यस्त्रं प्रसिद्धं स्याज् ॥फट्॥ज्वालाम्निर्व्यापकाङ्कुशः ॥क्रौं
शिरः स्वाहा द्विठो वह्निजाया ज्वलनवल्लभा ॥
दक्षजानुद्वयं सेन्दुः देवास्यं वह्निसुन्दरी ॥ स्वाहा ॥
४ इन्द्रासनगतो ब्रह्मा त्रिमूर्त्तीन्दुश्च मन्मथः ॥ क्लीं ॥
गर्जिनी-धूम्रभैरव्यौ दक्षवामपयोधरौ ।
व्योमास्यः कालवक्त्राढ्यो वर्म बिन्दीन्दुसंयुतः ॥ हुँ ॥
शून्यं क्षतजमारूढं चण्डभैरव्यलङ्कृतम् ।
८ नादबिन्दुयुतं मूर्ध्नि ज्योतिर्मन्त्र उदाहृतः ॥ ह्रौँ ॥
आदिदेवेन निर्दिष्टं मन्त्रकोषमनुत्तमम् ।
यदर्थिभ्यः पुरा गुप्तं तन्मयाऽद्य प्रकाशितम् ॥
यच्चडामरतन्त्रस्य मन्त्रकोषविवेचनम् ।
१२ क्रोधीशेन तु यत्प्रोक्तं भैरवाय महात्मने ॥
विद्युच्चण्डाशिनी गौरी क्रोशिनी नागिनी जया ।
किन्नरी योगिनी यक्षी भूतिनी प्रेतिनी नरी ॥
यामि(ग्रासि)नी त्रासिनी चण्डी कलेत्येवं प्रकीर्तिता ।
१६ कालभैरवेमरसर्वासु भूतलाङ्गलवरासु च (?) ॥
सुभगा सुमुखी चण्डी पार्वती सुरतप्रिया ।
उर्वशी चैन्द्रि(चित्रि)णी लीला कङ्काली मेखला शची ॥
मानिनी हंसिनी चौला कलना भू(धू)मिनीति च ।
२० आदिदेवेन निर्दिष्टाः प्रथमाधिपशक्तयः ॥
विभ्रमो बाहुलो दण्डी भैरवो नटकः शुकः ।
वृकोदरो जटो भीष्मः क्षोभकः खे(ख)चरो नटः ॥

१ निशाचरो ध्वजी भीमो विचित्रः कौषिको यमः ।
लिङ्गी वत्साधिको भृङ्गी मणिभद्रो घटोत्कचः ॥
महानन्दी शुको दण्डी सुग्रीवः कलहो भवः ।
४ दण्डी भाषान्तकोऽजेशो (गर्गो) हंसः पत्तैश्चरो हली ॥
चण्डीबीजमिति ख्यातं विद्युन्नागाङ्गनांशुकैः ।
औरसाधिकेऽंशुकाद्या च धूमिन्यसौ किन्नरः स्मृतः (?) ॥
उर्वश्यालङ्कृतो हंसो हंसेन्दुमस्तकोद्धृतः ॥ हूं ॥
८ विद्युच्चण्डा च हंसी च केतुर्नागिन्यलङ्कृता ॥ ह (?)
डिण्डिभेन सरक्तेन कामिनी विन्दुभिः शशी ॥ श्रीँ ॥
हंससुग्रीवपार्वत्या कपर्दीन्द्वाद्यलङ्कृता ॥ ह्रीँ ॥
विग्रहकलहकामिनीन्द्वादिप्राणहारिणी ॥ क्लीँ ॥
१२ विभ्रमो रक्तपार्वत्यै स्वाहा उल्कामुखी स्मृता ॥
ज्वालन्धरीति विख्याता सविन्द्विन्दुकला नटी ॥ ठं ॥
हंसः सुग्रीवचण्डाद्यैः खद्योतैः परिकीर्तिता ॥ हँ ॥
श्यामालिङ्गितदेहोऽसौ खद्योतो ज्योतिरीरितः ॥ हौँ ॥
१६ यमः सुग्रीवः कामिनीन्द्रेन्द्वाद्यैः किन्नरीति च ॥ हु ॥
सुग्रीवोऽपि यमश्चण्डो नीलाद्यैर्वाण ईरितः ॥ द्राँ ॥
यमः सुग्रीवबिन्द्वीन्दुजपाद्यः पिशिताशनः ॥ द्रूँ ॥
त्यागिनं मणिभद्रस्थं प्रेतिनीन्द्वाद्यलङ्कृतम् ।
२० युगान्तकारकं बीजं भैरवेण प्रकाशितम् ॥ स्फें ॥
भृङ्गिणं मेखलायुक्तं प्रेतिनीन्द्वाद्यलङ्कृतम् ।
बीजं वैतालिकं प्रोक्तं द्विठेनोक्ता मनोहरी ॥ प्लें स्वाहा ॥

१ विभ्रमो धूमिनी विद्युच्चण्डिकाद्यस्तु काकिनी ।
ध्वाङ्क्षबीजमिति ख्यातं सर्वतन्त्रेषु गोपितम् ॥ प्रीँ ॥
नटद्वयेन धूमिन्या उर्ध्वकेश्या ह्यलङ्कृतम् (?) ॥ फ्रौँ ॥
४ नटो धवानसंयुक्तो नटीतीक्ष्णपयोधरैः (?) ॥ टं ठं ॥
पार्वत्यालिङ्गितं मणिभद्रस्थं योगिनीप्रिये ।
फेत्कारिणीति विख्याता विद्युच्चण्डविभूषिता ॥ स्फीँ ॥
सुग्रीवास्थिलयः श्रोत्रे ह्यद्यत्वाविकलादृशः (?) ।
८ विकलायाः स्वभावे च स्याद्गौरीति च पार्वती ॥
मूलार्णमासमाख्यातं हृदयं स्वरशक्तयः ।
भवस्थित्यन्तसानेषु विज्ञातव्यं यथोत्तरम् ॥
आदिदेवेन निर्दिष्टं जम्बुद्वीपे कलौ युगे ।
१२ मन्त्रकोषमिदं भूतयक्षडामरतन्त्रयोः ॥
मर्त्यानामुपकाराय त्रिषु लोकेषु दुर्लभम् ॥

इति श्रीभैरवविरचितो बीजनिघण्टुमन्त्रकोषः
समाप्तः

# अथ मातृकानिघण्टुः

श्रीगणेशं नृसिंह तं भारतोमीश्वरं गुरुम् ।
नत्वा वक्ष्ये मातृकाणां निघण्टुं बालबुद्धये ॥ १ ॥
ध्रुवस्तारस्त्रिवृद् ब्रह्म वेदाद्य(दि)स्तारकोऽव्ययः ।
प्रणवश्च त्रिमात्रोऽपि ओङ्कारो ज्योतिरादिमः ॥ २ ॥
श्रीकण्ठः केशवः कण्ठो निवृत्तिश्च स्वरादिकः ।
अ-कारो मातृकाद्यश्च वात इत्यपि कीर्त्तितः ॥ ३ ॥
नारायणस्तथाऽनन्तो मुखवृत्तं गुरुस्तथा ।
विष्णुशय्या तथा शेषो दीर्घं आ-कार एव च ॥ ४ ॥
माधवः सूक्ष्मसंज्ञश्च विद्या दक्षिणलोचनम् ।
गन्धर्वः पाञ्चजन्यश्च इ-कारश्च मखाङ्कुरः(न्तकः) ॥ ५ ॥
गोविन्दश्च त्रिमूर्त्तीशः शान्तिः स्याद्वामलोचनम् ।
नृसिंहास्त्रं तथा माया ई-कारोऽपि सुरेश्वरः ॥ ६ ॥
अमरेशस्तथा विष्णुरिन्धिका च गजाङ्कुशः ।
दक्षकर्णश्च विज(न)य उ-कारो मन्मथाभिधः ॥ ७ ॥
अर्घीशो दीपिका वामश्रवणो मधुसूदनः ।
इन्द्रश्चापः षण्मुखश्च ऊ-कारो रक्षणाभिधः ॥ ८ ॥
रेचिका दक्षनासा च भारभूतिस्त्रिविक्रमः ।
देवमाता रिपुघ्नश्च ऋ-कारस्तपनः स्मृतः ॥ ९ ॥
अतिथीशो वामनश्च मोचिका वामनासिका ।
दैत्यमाता च दैवज्ञ ॠ-कारस्त्रिपुरान्तकः ॥ १० ॥

१ श्रीधरश्चामरः(परा) स्थाणुर्दक्षगण्डस्त्रिवेद(देव)कः ।
एकाङ्घ्रिर्वज्रदण्डश्च व्योमार्द्धं लृ-स्वरः स्मृतः ॥ ११ ॥
हृषीकेशो हरः सूक्ष्मो वामगण्डः कुवेरदृक् ।
४ अर्द्धचौ नीलचरण ॡ-कारश्च त्रिकण्ठ(कूट)कः ॥ १२ ॥
झिण्टीशः[१] पद्मनाभश्च शक्तिर्दक्षः क्षमाऽमृतम्[२] ।
भग ऊर्ध्वं[३] कामरूप एकारश्च त्रिकोणकः ॥ १३ ॥
ज्ञानामृता भौतिकश्च धरा दामोदरस्तथा ।
८ वागीशो व(ध)र्म भयद[४] ऐ-कारस्त्रिपुरस्तथा ॥ १४ ॥
सद्योजातो वासुदेवो रुद्रो[५] दन्तस्त्रिमातृ(त्र)कः ।
आप्यायनी मन्त्रनाथ ओ-कारो न(ना)गसंज्ञकः ॥ १५ ॥
सङ्कर्षणोऽनुग्रहेशो मुरारिर्व्यापिनी तथा ।
१२ अधोदन्तगतो मायी नृसिंहाङ्गं तथौ-स्वरः ॥ १६ ॥
अक्रूरो व्योमरूपश्च प्रद्युम्नश्चन्द्रसंज्ञकः ।
अनुस्वारस्तथा बिन्दुरं-कारश्च शिरोगतः ॥ १७ ॥
अनन्तश्च महासेनोऽनिरुद्धो रसव(ना)र्णकः ।
१६ कन्यास्तननिभः सर्गो विसर्गश्चान्तिमस्वरः ॥ १८ ॥
(एतानि स्वरनामानि । मातृकाव्यञ्जननामनि वच्मि ॥)
क्रोधीशो धातृसंज्ञश्च चक्री सृष्टिः करादिगः ।
वर्गादिर्माया देवेशः[६] क-कारः कामगः स्मृतः ॥ १९ ॥
२० ऋद्धिर्गदी च चण्डेशः खेटो दक्षिणकूर्परः ।
कैटभश्चैव[७] मातङ्गः संहारः खार्णकः स्मृतः ॥ २० ॥

१ सिद्धीशः २ सूक्ष्माऽमृता भगः ३ कर्णौष्ठः ४ धर्मभरद ५ ऊर्ध्वदन्तः ६ मो. पार्श्वे ७ आदि[illegible]

१ स्मृतिः पश्चान्तकः शार्ङ्गी गणेशो मणिबन्धगः ।
गोमुखो गजकुम्भश्च ग-कारः सिंहसंज्ञकः ॥ २१ ॥
खड्गी शिवोत्त(न)मो मेधा दक्षिणाङ्गुलिमूलकम्(गः) ।
४ घनो घनस्वरश्चैव घ-कारो ङादिमः स्मृतः ॥ २२ ॥
शङ्खको रुद्रकान्तिश्च दक्षाङ्गुल्यग्रसंस्थितः ।
क्लीबवक्त्रश्च भा(भ)द्रेशो ङ-कारश्चानुनासिकः ॥ २३ ॥
हली कूर्मेश्वरो लक्ष्मीर्वामबा(ह्वादिग)हुर्द्दिशस्तथा ।
८ चि(त्ताचा)त्र-वारी चञ्चलश्च च-कारः संस्मृतो बुधैः ॥ २४
एकनेत्रश्च मुषली वामकूर्परगो द्युतिः ।
त्रिविन्दुकस्तथाचारी छ-कारः प्रेक्ष(श्लेष्म)काभिधः ॥२५
स्थिरो जयन्तो जयजः शूली च चतुराननः ।
१२ मणिबन्धगतो वामो ज-कारो जप(न)को मतः ॥ २६ ॥
स्थितिः पाशी तथाऽजे(हे)शो वामाङ्गुलितलस्थितः ।
स्वस्तिकः खण्डसंज्ञश्च झ-कारो जान्तसंज्ञकः ॥ २७ ॥
वामाङ्गुल्यग्रतः(गः) सिद्धिरङ्कुशः सर्वसंज्ञकः ।
१६ ज्ञप्रियो(प्तिगो) ह्यनुनासश्च ञ-कारश्च निरञ्जनः ॥ २८ ॥
जरा मुकुन्दः सोमेशो दक्षपादादिगो मुखम्(कः) ।
गजाङ्कुशश्च बालेन्दुरमृताद्यष्ट-कारकः ॥ २९ ॥
लाङ्गलीशो नदज्ञ(न्दज)श्च पालिनी च कमण्डलुः ।
२० दक्षजानुर(ग)तः स्थायी ठ-कारः स्थविरः स्मृतः ॥ ३० ॥
नन्दी क्षान्तिर्धा(र्दा)रकश्च चा(डा)मरो दक्षगुल्फगः ।
व्याघ्रपादः शुभाङ्घ्रिश्च ड-कारो भौमजः स्मृतः ॥ ३१ ॥

१ ईश्वरश्चार्द्धनारीशो नरः शङ्कान्तराकृतः(तिः)।
दायादोऽङ्गुलिमूलश्च ढ-श्च सङ्कोचकारकः ॥ ३२ ॥
उमाकान्तो नरकजिद् रतिदक्षपदाग्रगः।
४ निर्वाणस्त्रिगुणाकारस्त्रिरेखो णः समीरितः ॥ ३३ ॥
वामोरुर्मीन(मूल)निलय आषाढ़ी कामिको हरिः।
तीव्रश्च तरलो नीलस्त-कारः कीर्त्तितो बुधैः ॥ ३४ ॥
दण्डीशो वरदः कृष्णो वामजानुगतः स्थिरः।
८ सौरिश्चापि विशालाक्षी थ-कारः परिकीर्त्तितः ॥ ३५ ॥
सत्योऽत्री(शसः श्री)शो ह्लादिनी च वामगुल्फगतस्तथा।
शूलः कुवेरो दाता च द-कारो धादिमः स्मृतः ॥ ३६ ॥
मीनेशः सात्वतः प्रीतिर्वामपादाङ्गुलीगतः।
१२ धर्मे(ने)शो धरणीशश्च ध-कारो दान्तिमो मतः ॥ ३७ ॥
शर्वो मन्त्रेश्वरो दीर्घो वामपादाङ्गुलाग्रगः।
नरो नदी च नादी च न-कारश्चानुनासिकः ॥ ३८ ॥
तीक्ष्णा च लोहितः शूरो दक्षपाणि(र्श्व)श्च पार्थिवः।
१६ पद्मेशो नान्तिमः फादिः प-कारोऽपि प्रकीर्त्तितः ॥ ३९ ॥
जनार्द्दनः शिखो रौद्री वामपार्श्वकृतालयः।
फट्कारः प्रोच्यते सद्भिः फ-कारः पान्तिमस्तथा ॥ ४० ॥
छगलण्डो भूधरश्चाभया पृष्ठ(ष्ठं)गतस्तथा।
२० सुरसो वज्रमुष्टिश्च व-कारो भादिमोऽपि च ॥ ४१ ॥
विश्वमूर्त्तिर्द्विरण्डेशो निद्रा नाभिगतस्तथा।
भृकुटी च भरद्वाजो भ-कारश्च भयावहः ॥ ४२ ॥

वैकुण्ठश्च महाकालस्तन्द्री(न्त्री) जठरसंस्थितः ।
मन्त्रेशो मण्डलो मानी विषं सूर्यो म-कारकः ॥ ४३ ॥
क्षुधा बाली च वायुस्त्वग् हृद्गतः पुरुषोत्तमः ।
यमुना यामुनेयश्च य-कारो मान्तिमः स्मृतः ॥ ४४ ॥
क्रोधिनी च भुजङ्गेशो बाली रुधिर-पावकौ ।
रोचिष्मान् दक्षिणांशश्च रुचिरो रेफ ईरितः ॥ ४५ ॥
क्रिया ककुदो मांसश्च पिनाकी भूर्बलानुजः ।
लम्पटः शक्रसंज्ञश्च वायवीयो ल-कारकः ॥ ४६ ॥
बाली वामांसनिलयो मेदो वारिद-वारुणौ ।
हृ(उ)त्कारी जलसंज्ञश्च चण्डीशोऽपि व-कारकः ॥ ४७ ॥
मृत्युर्वको वृ(वि)षघ्नश्च हृदो दक्षकरस्थितः ।
शङ्ख(ङ्कु)कर्णोऽस्थिसंज्ञश्च श-कारो विद्भिरीरितः ॥ ४८
वृषः श्वेतेश्वरः पीता मज्जा तृड् वामबाहुगः ।
षडाननः षडाकारः ष-कारः कीर्त्तितो बुधैः ४९ ॥
भृगुः श्वेतस्तथा हंसो हृदो दक्षिणपादगः ।
समयः सामगः शुक्रः सङ्गतिः साणकः शशी ॥ ५० ॥
नभो वराहो नकुली हृदो वामपदः स्थितः(तिः) ।
सदाशिवोऽरुणः प्राणो हयग्रीवो ह-कारकः ॥ ५१ ॥
हृदयान्नाभिसंस्थानः शिवेशः क(त्रि)मलोऽसितः ।
लघुप्रयत्नश्चोपान्त्यो(त्यो) ल-कारः प्रोच्यते बुधैः ॥ ५२ ॥
संवर्त्तको नृसिंहश्च हृदयान्मुखसंस्थितः ।
अनन्तः परमात्मा च वज्रकायोऽन्तिमः क्ष-कः ॥ ५३ ॥

अथ कादिमते प्रोक्ताः शंकरेण शिवां प्रति ।
अकारादिक्षकारान्ता वर्णसंज्ञाः क्रमाद् ब्रुवे ॥ ५४ ॥
वातो मरुच्चाग्निवह्निधरा क्ष्मा जल-वारिणी ।
विभुः खञ्च चरः शुचिर्भूर्वनं स्वञ्च शक्तियुक् ॥ ५५ ॥
प्राणस्तेजः स्थिरा वार्यु वायुश्चापि प्रभा जया ।
कमभ्रं नाद-द्रावौ च कुः पाथो व्योम तारकः ॥ ५६ ॥
शिखी गोत्रा तोय-शून्ये जवा द्युती रविः स्मृतः ।
भूमी रसो नभश्चैव व्याप्तं दाहो रसाऽम्बुधिः ॥ ५७ ॥
वियत् स्पर्शश्च रुद्धंस इला तासां क्रमाः स्मृताः[१] ।
मातृकावर्णसंज्ञास्तु ता ज्ञात्वा चोद्धरेन्मनून् ॥ ५८ ॥
ग्रन्थाननेकानालोक्य महीदासेन धीमता ।
मातृकाक्षरसंज्ञेयं बद्धा स्वपरबुद्धये ॥ ५९ ॥

इति श्रीमन्महीदासविरचित-मातृका-
निघण्टुः समाप्तः

१ अयं तावद् वर्णसंज्ञोद्धारप्रकारः—

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| वातः | मरुत् | अग्निः | वह्निः | धरा | क्ष्मा | जलम् | वारि | विभुः | खं |
| अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | ऌ | ॡ |
| चरः | शुचिः | भूः | वनं | स्वं | शक्तिः | प्राणः | तेजः | स्थिरा | वार्यु |
| ए | ऐ | ओ | औ | अं | अः | क | ख | ग | घ |
| वायुः | प्रभा | जया | कम् | अभ्रम् | नादः | द्रावः | कुः | पाथः | व्योम |
| ङ | च | छ | ज | झ | ञ | ट | ठ | ड | ढ |
| तारकः | शिखी | गोत्रा | तोयम् | शून्यम् | जवा | द्युतिः | रविः | भूमिः | रसः |
| ण | त | थ | द | ध | न | प | फ | ब | भ |
| नभः | व्याप्तं | दाहः | रसा | अम्बुधिः | वियत् | स्पर्शः | रुत् | हंसः | इला |
| म | य | र | ल | व | श | ष | स | ह | क्ष |

कारान्तर-

# मातृकानिघण्टुः

ध्रुवस्तारस्तथौङ्कारो मूलज्योतिः शिवोऽव्ययः ।
वेदाद्यस्तारकोऽव्यक्तः शाखादिः प्रणवः स्मृतः ॥ १ ॥
मातृकाद्यः स्वराद्यश्च श्रीकण्ठः केशवो लघुः ।
कलाद्यः केशवः कृष्णो भूतेशः प्रथमो भवेत् ॥ २ ॥
ह्वत् तारको गुरुर्दीर्घो नारायण-चतुर्मुखौ ।
अनन्तो वासुदेवश्च वेदान्तः कारकः स्मृतः ॥ ३ ॥
दक्षाक्षो माधवः सूक्ष्मः पाञ्चजन्यो मखांकुरः ।
विड् बिन्दुः परमेशश्च गन्धर्वः परमः स्मृतः ॥ ४ ॥
वामाक्षिश्च त्रिमूर्त्तिश्च महामाया सुरेश्वरः ।
इन्द्रमूर्त्तिर्नृसिंहास्त्रं स्मृतो गोविन्द ई-स्वरः ॥ ५ ॥
याम्यकर्णोऽमरेशश्च मन्मथोऽथ गजाङ्कुशः ।
विजयो विघ्नहर्त्ता च विष्णुरुकारकः स्मृतः ॥ ६ ॥
वामकर्णोऽथ वामांसो दीर्घश्च मधुसूदनः ।
इन्द्रचापोऽथ सूक्ष्मश्च षण्मुखः षट्स्वरः स्मृतः ॥ ७ ॥
दक्षनासा त्रिविक्रान्तो भारभूर्वि(तिर्ग्र)ग्रहाधिपः ।
ऋङ्मूर्त्तिस्तु यती धर्म(र्मो)रिपुघ्न ऋ-स्वरः स्मृतः ॥ ८ ॥
वामनासा(ऽ)तिथीशश्च श्रीकण्ठस्त्रिपुरान्तकः ।
अमृतेशः स्वरः स्थाणुर्देवजु(कोऽ)ष्टस्वरः स्मृतः ॥ ९ ॥
याम्यगण्डस्थितः स्थाणुर्हृशीकेशस्त्रिदेवकः ।
एकाङ्घ्रिर्वज्रदण्डश्च व्योमाद्री लृ-स्वरः स्मृतः ॥ १० ॥

१ वामगण्डोदरार्द्धे च पद्मनाभः कुबेरदृक् ।
गणेशश्च त्रिकण्ठश्च नीलाङ्घ्रिर्दशमः स्वरः ॥ ११ ॥
ऊर्ध्वहस्तो गजज्योतिर्दामोदरस्त्रिकोणकः ।
४ झिण्टीशः कामरूपश्च शक्तिरेकारकः स्मृतः ॥ १२ ॥
अधो धरेन्द्र-वागीशा वासुदेवोऽथ भौतिकः ।
त्रैपुरः प्रणतो वर्म-मरुतौ द्वादशस्वरः ॥ १३ ॥
ऊर्ध्वदन्तालिजः सद्यः सङ्कर्षणस्त्रिमात्रकः ।
८ मन्त्रेशो नगसंज्ञश्च मात्रेशस्त्वोस्वरः स्मृतः ॥ १४ ॥
अधोदन्तानिलो मित्रः प्रद्युम्नोऽनुग्रहेश्वरः ।
नृसिंहाख्यो मुरारिश्च मायाविश्चौस्वरः स्मृतः ॥ १५ ॥
ऊर्ध्वदन्तश्चानिरुद्धो हरो भानुः स्वरः शशी ।
१२ मनश्चानङ्ग-कवचौ निगूढ़ अं-स्वरः स्मृतः ॥ १६ ॥
कात्तिकेयोऽनिरुद्धश्च शिल्पाभिज्ञो रमापि च ।
सृष्टिः संहारकर्त्ता च विषं च अः-स्वरः स्मृतः ॥ १७ ॥
याम्यकर्णादिकः क्रोधी वायुवह्निगदी रुजा ।
१६ यादवेशो मुरारिश्च कामाङ्गः कार्णकः स्मृतः ॥ १८ ॥
दक्षिणकूपरः खेटः शार्ङ्गी चण्डीशकः खगः ।
कैटभारिश्च मातङ्गः संहारः खार्णकः स्मृतः ॥ १९ ॥
मणिबन्धस्थितः सिंहः पञ्चान्तक-गणेश्वरौ ।
२० गोमुखो गजकुम्भश्च हलीशश्च गजाननः ॥ २० ॥
अङ्गुलीमूलगो मेघो मुषली च शिवोत्तमः ।
वराहो धनकामश्च शिवाऽघो घार्णकः स्मृतः ॥ २१ ॥

१ दक्षाङ्गुल्यग्रगः शूली क्रीबाख्यश्चैव रुद्रकः ।
डामरेशो हरिः श्रीमान् रुद्रेशो ङार्णकः स्मृतः ॥ २२ ॥
ना चामरादिकः कूमः शूली चन्द्रक-सायकौ ।
४ भूभेत्ता चित्रचारी च चञ्चलश्चार्णको मतः ॥ २३ ॥
वामकूर्परगः पाशी परिपूर्णैकनेत्रकौ ।
त्रिबिन्दुको ज्वरी वामा श्लेषकश्छार्णकः स्मृतः ॥ २४ ॥
वाममणिबन्धगतश्चतुर्मुखो जयन्तकः ।
८ जपज्योतिरनाकारो जनक उत जार्णकः ॥ २५ ॥
अङ्गुलीमूलगः खण्डः कुमुदः स्वस्तिकः स्मृतः ।
विख्यातकः स्थिराकारो झङ्कारो झार्णको मतः ॥ २६ ॥
वामाङ्गुल्यग्रगः सोमो नन्दो विड्डिड् निरञ्जनः ।
१२ सुधर्मो ह्यनुनासश्च ज्ञप्तिगो ञार्णकः स्मृतः ॥ २७ ॥
दक्षपादादिगो नन्दी लाङ्गली चार्द्धचन्द्रकः ।
गजाङ्कुशो मृगाद्यश्च बालेन्दुष्टार्णकः स्मृतः ॥ २८ ॥
याम्यगुल्फोऽर्द्धनारीशो भौमजो दिव्यनायकः ।
१६ सुधाबिन्दुर्घटाकारः प्लावकष्ठार्णको मतः ॥ २९ ॥
याम्यजानुस्थितो दण्डो दारुको वत्सलो नरः ।
डामरो व्याघ्रपादश्च शूली स्त्री डार्णकः स्मृतः ॥ ३० ॥
याम्यपादाङ्गुली पूर्णोऽप्युमाकान्तस्तथा हरिः ।
२० शङ्खनाभिर्दृढं लोहो दाहको ढार्णकः स्मृतः ॥ ३१ ॥
याम्यपादाङ्गुलाग्रस्थ आषाढीशस्त्रिविक्रमः ।
त्रिरेखस्त्रिगुणाकारो निर्वाणो णार्णको मतः ॥ ३२ ॥

१ वामपादादिकस्तीव्रो हस्त्यश्वतरलोऽङ्घ्रिकः ।
नीलकोऽप्यर्थको धाता तड़ित् तु तार्णको मतः ॥ ३३ ॥
वामजानुर्विशालाक्षी शौरी दृग् वै कमण्डलुः ।
४ सूचीपूरस्थिरस्थायी स्थविरस्थार्णको मतः ॥ ३४ ॥
वामगुल्फस्थितः शूली दात्री दाता कुबेरकः ।
चन्द्रकश्च हरिद्रान्तो देवेशो दार्णकः स्मृतः ॥ ३५ ॥
वामाङ्गुल्यादिको मीनो जनार्दन-शिरः-कराः ।
८ धर्मेशो धरणीशश्च स्थाणुः प्रीतिश्च धार्णकः ॥ ३६ ॥
वामाङ्गुल्यग्रगो मेषो भूधरोऽथ विशाम्पतिः ।
नरोऽन्तरं दिनं दीनो नदीनो नार्णकः स्मृतः ॥ ३७ ॥
याम्यपार्श्वो दक्षकुक्षिर्विश्वार्त्तिश्चैव लोहितः ।
१२ पार्थिवः पद्मनाभश्च पद्मेशः पार्णकः स्मृतः ॥ ३८ ॥
वामपार्श्वोऽथ वैकुण्ठः शिवोऽनलस्त्रिपत्रकः ।
कान्तोरगौ सरित् फुल्लः फट्कारः फार्णको मतः ॥ ३९ ॥
पृष्ठवंशो गणेशश्छगलण्डः पुरुषोत्तमः ।
१६ बलवान् वज्रमुष्टिश्च सुरसो बार्णकः स्मृतः ॥ ४० ॥
नाभिजश्च द्विरण्डेशो भारवाही जया बलः ।
शुभदोऽथ भरद्वाजो भृकुटी भार्णकः स्मृतः ॥ ४१ ॥
जठरो भाववीरश्च महाबालो बलानुजः ।
२० माधवो मरणं मायी मन्त्रेशो मार्णको मतः ॥ ४२ ॥
यमो वरुण-वागीशौ स्वशनो यामुनेयकः ।
मृगेन्द्रो वायुसंज्ञश्च वचनं यार्णकः स्मृतः ॥ ४३ ॥

१ असृग् यातुष ईषघ्नो भुजङ्गेशो हुताशनः ।
तीव्रज्योतिः परं चिह्नं सुचिरो रार्णको मतः ॥ ४४ ॥
मेधा धियो जलान्तस्थः खड्गीशो हंस-वारिदौ ।
४ वरुणश्च शिवो रौद्रो मृतेशो वार्णकः स्मृतः ॥ ४५ ॥
अस्थि धातुर्वराहश्च लक्ष्मीशः शंकु-कर्णिके ।
तथा नयः समिधश्च साम्बकः शार्णकः स्मृतः ॥ ४६ ॥
शुक्ल-धातू भृगुर्हंसः सामगः सत्यसङ्गतिः ।
८ मत्यानन्दोऽथ दीप्तास्यः समयः षार्णकः स्मृतः ॥ ४७ ॥
मज्जाह्वयः श्वेतरूपो विलेपश्च घटाकृतिः ।
षड़ाननः षड़ाकारः षड़टः सार्णको मतः ॥ ४८ ॥
प्राणनोऽथ हलीशश्च हयानन-सदाशिवौ ।
१२ हुताशो हाकिनी द्रावो हेरम्बो हार्णको मतः ॥ ३६ ॥
नन्दी च परमात्मा च संवर्त्तक-कृतान्तकौ ।
वज्रकायोऽव्ययो व्यापी नृसिंहः क्षार्णकः स्मृतः ॥ ५० ॥
निघण्टुर्मातृकार्णानां कण्ठपीठे निधीयताम् ।
१६ विस्फोटनाय मन्त्राणां सलीलं पण्डितैर्जनैः ॥ ५१ ॥
शरीरे सर्वमन्त्राणामुद्धाराय सुबुद्धिभिः ॥ ५२ ॥

इति श्रीदेशिकमण्डलीमुकुटमाणिक्योपम-परमहंस-
श्रीमध्वाचार्यविरचितो मातृका-
निघण्टुः समाप्तः ।

प्रकारान्तर-

# मातृकानिघण्टुः



श्रीभैरव उवाच—

निघण्टमातृकां देवि कथयस्व प्रसादतः ।
यया विज्ञातया देवि सर्वज्ञत्वं प्रजायते ॥
यथा जानासि देवेशि निर्घण्टं कथयस्व मे ॥ १ ॥

श्रीभैरव्युवाच—

साधु साधु महाबाहो लोकानां हितकारक ।
परं गूढ़ं निगूढञ्च निर्घण्टमातृकाक्षरम् ॥ २ ॥
गुरोः परम्पराज्ञातं सबाह्याभ्यन्तरस्थितम् ।
नहि जानन्ति ये मूढाः फलं न स्यान् महेश्वर ॥ ३ ॥
मन्त्रोद्धारप्रसङ्गञ्च पूजाखण्डं गुरुक्रमम् ।
मालिनीशक्तिसङ्केतं सिद्धान्तं वामदक्षिणम् ॥ ४ ॥
गारुड़ं भूततन्त्रञ्च भैरवं सारसंग्रहम् ।
निर्घण्टकं मया प्रोक्तं शतकोटिप्रविस्तरम् ॥ ५ ॥

श्रीभैरव उवाच—

स्वच्छन्दगतिसद्भावं भेदनिन्दाविसर्पिणम् ।
किञ्चित् किञ्चिच्च जानामि न जानामि च मातृकाम् ॥ ६
अहीनमन्त्रं जानीयाद् हीनमन्त्रञ्च मातृकाम् ।
गोत्रहीनञ्च संस्थानं गुरुहीनं पदे पदे ॥ ७ ॥

श्रीभैरव्युवाच—

तत्र स्नेहात् प्रवक्ष्यामि निर्घण्टमातृकां श्रृणु ।
सर्वादौ प्रणवो मन्त्रस्तदुद्धारं श्रृणु प्रिय ॥ ८ ॥
ॐकारो वर्त्तुलस्तारो विन्दुशक्तिस्त्रितत्त्वकम् ।
प्रणवश्चन्द्र साद्यश्च पञ्चदेवो ध्रुवस्त्रिकः ॥ ॐ ॥ ९ ॥
श्रीकण्ठ आद्यजो ह्रस्वो ब्रह्म चैवादिमातृका ।
सुरेशश्चैव वागीशः सारस्वतो ललाटजः ॥ अ ॥ १० ॥
अनन्तश्चान्तको वक्त्र-विश्रान्तौ चरुजः स्मृतः ।
क्षीरोदधिः पयोदश्च दीर्घच्छायो विनायकः ॥ आ ॥११॥
इकारश्चन्द्र-सूक्ष्मौ च दक्षनेत्रं सुगुह्यकः ।
रुद्रश्च कोटरश्चैव नासिका परिकीर्त्तितः ॥ इ ॥ १२ ॥
ई-स्त्रिमूर्तिर्वामनेत्रं शेखरः कोटरस्तथा ।
वाग्मी शुद्धश्च जिह्वाख्यो माया विष्णुः प्रकाशितः ॥ ई ॥
अमरेशो दक्षकर्णा उग्रश्चेति तमोहनः ।
विश्वकर्मा तथा श्रोत्रं वभ्रुः कालः प्रकीर्त्तितः ॥ उ ॥ १४ ॥
ऊ-रर्धीशो महेशश्च ऊकारः श्रोत्रमेव च ।
प्रजेशः सर्वश्रोत्रश्च ऊकारो नवभैरवः ॥ ऊ ॥ १५ ॥
ऋकारो भाव(र)भूतिश्च दक्षनासापुटस्तथा ।
निवृत्ती रुद्रमाया च एकपादश्च कथ्यते ॥ ऋ ॥ १६ ॥
अतिथीशो वामनासा प्रतिष्ठा पतिरेव च ।
अक्षाग्रजश्च मायाग्नेरूर्ध्वमूर्त्तिः प्रकीर्त्तितः ॥ ॠ ॥ १७॥

लृः स्थाणुर्दक्षगण्डश्च विशेषश्चैव पार्थिवः ।
महेन्द्रो लाङ्गलिश्चैव राजा धूम्रो वकस्तथा ॥ लृ ॥ १८ ॥
लॄ-र्हरो वामगण्डश्च मायावी शङ्क-स्वस्तिकौ ।
शान्तिकृत् शुद्ध-रुद्रौ च नीलपादोपलोनुपः ॥ लॄ ॥१६॥
झिण्टीश ऊर्ध्वदन्ताख्यो ह्यग्निर्वाग्भव एव च ।
भगश्च दक्षदन्तश्च ज्ञान-शक्ती च जङ्घकः ॥ ए ॥ २० ॥
भौतीशश्चाधोदन्तश्च क्षमात्मकः समातृकः ।
वामजानुर्जगद्योनिः पीठेशश्चांशुमान् विभुः ॥ ऐ ॥२१॥
ओः सद्योजात ऊर्ध्वास्यो गायत्री दक्षजङ्घकः ।
अजेशश्चैव पीयूषः पश्चिमास्यः श्रुतिस्तथा ॥ ओ ॥ २२ ॥
····अनुश्चाध ओष्ठः (?) शान्तिको वामजङ्घकः ।
तैजसश्चैव कण्ठोष्ठौ नादाक्षश्च सदाशिवः ॥ औ ॥ २३ ॥
अं क्रूरो घण्टिका दण्डो बिन्दुकः समगुह्यकः ।
चञ्चुः परिजयोनिश्च सौख्य-दुःख-प्रवर्त्तकाः ॥ अं ॥ २४ ॥
महासेनो द्विजिह्वाख्यो हयो भद्रश्च कण्टकः ।
द्विबिन्दुकोऽमरेशश्च सोमश्चैव हरिस्तथा ॥ अः ॥ २५ ॥
कः क्रोधीशो दक्षस्कन्धो ह्यग्निरुद्रश्च मन्मथः ।
तैजसः शान्तिकापाली वासुदेवश्च मस्तकः ॥ क ॥ २६ ॥
खः प्रचण्डो दक्षबाहुः शून्यश्चाकाश एव च ।
कपाली दन्तजातीशः श्रीखण्डी कामरूपिणः ॥ ख ॥ २७॥
गः पश्चान्तः पृथग्रूपः शित्रदर्शनसंज्ञकः ।
गणेश्वरो द्विजाख्यश्च गौरवो गौश्च स्वर्गगः ॥ ग ॥ २८ ॥

घः संहर्ता दक्षकरः काम(ल)रूपी शिवोत्तमः ।
खड्गी सव्यो घोरनामा मेधा गौश्च घकारकः ॥
शिवाख्यो लाङ्गली मूलो दन्तुरो घुर्घुरोऽपि च ॥ घ ॥२६॥
ङ-कारश्चैव रुद्रश्च दक्षहस्तस्तिली नखः ।
खर्परश्च द्विजात्मा च एकवक्त्रो गतिस्तथा ॥ ङ ॥ ३० ॥
चः कूर्मो वामजङ्घाख्यो द्विनेत्रश्चैकरूपकः ।
तृतीयलोचनश्चैव चर्ममुण्डधरस्तथा ॥ च ॥ ३१ ॥
छ-श्चैकनेत्रो वामश्च वामबाहुश्च लाङ्गली ।
द्विशिरा एकपादश्च पशुः पशुपतिस्तथा ॥ छ ॥ ३२ ॥
ज-श्चतुराननो वामः कूर्परश्च त्रिशूलिनः ।
दीर्घबाहुश्च शाखाख्यो धातारश्च विभुस्तथा ॥ ज ॥ ३३ ॥
झो जिह्वा वामहस्तश्च कङ्कणः कृतमण्डलः ।
अकल्पक(त)श्च झङ्कारी दक्षशाखा गुहस्तथा ॥ झ ॥ ३४ ॥
दीर्घबाहू रसो रूपं नादाख्यश्चातिचञ्चलः ।
ञो धर्मः सुखदो ज्ञानी वामकराङ्गुलीनखः ॥
एकपादः कुण्डली च वामपाणिस्तथा नखः ॥ ञ ॥ ३५ ॥
ट-कारः सोमनाथाख्यः खेचरो दक्षस्फिक् कटिः ।
कपाली वामकटिश्च अर्धचन्द्रः पुनर्भवः ॥ ट ॥ ३६ ॥
ठकारो लाङ्गली चैव दक्षोरुर्वर्त्तुलः पुनः ।
पूर्णचन्द्रामृताख्यौ च तथा करतलद्वयम् ॥
वनजो जीवनो जीवो वृषघ्नश्चन्द्रकः सुधा ॥ ठ ॥ ३७ ॥

ड-कारो दारुकः प्रोक्तो दक्षजानुश्च पालकः ।
वामबाहुश्च कौमारी तथा वै योगिनीप्रियः ॥ ड ॥ ३८ ॥
ढ-कारोऽप्यर्धनारीशो दक्षजङ्घाभिधस्तथा ।
विनायकः सिद्धिदाता विघ्नेशः सव्यबाहुकः ॥ ढ ॥ ३९ ॥
ण-कारश्च उमाकान्तो दक्षपादाभिधस्तथा ।
नारायणो द्विनेत्रश्च तथा वै योगिनां प्रियः ॥ ण ॥ ४० ॥
तमाटः षाटिर्वामस्फिक् ताराख्य ऊर्ध्वजानुकः ।
शक्ती शक्तिर्जटा चैव तारको मध्यकर्णकः ॥ त ॥ ४१ ॥
थः स्त्री वासी भयानकः शिली शिरसिजस्तथा ।
महाग्रन्थिश्च विख्यातो ग्रन्थिग्राहक एव च ॥ थ ॥ ४२ ॥
दोऽद्रीशो वामजानुश्च दाता धाता च धातकिः ।
कुण्डलं दक्षपादश्च तथा धर्माभिधायकः ॥ द ॥ ४३ ॥
ध-कारो वामजङ्घा च प्रियश्च दर्शनस्तथा ।
नेत्रयुग्मश्च संज्ञा च स्थाणुरस्थाणुरीश्वरः ॥ ध ॥ ४३ ॥
नो मेषो वामपादश्चानादिर्नीलश्च वामनः ।
दन्तुरश्चोर्ध्ववासी च नरदेवो निरञ्जनः ॥ न ॥ ४५ ॥
निधिः शेषो गुह्यकर्त्ता तपनः पश्चमस्तथा ।
वीरभद्रा च सावित्री कालरात्रिः पुरारिहा ॥ प ॥ ४६ ॥
फः शिखी वामपार्श्वश्च फेत्कारो वामपादकः ।
नीलपादस्तथा प्रोक्तः शिखी वै शाखिनां प्रियः ॥ फ ॥ ४७ ॥
ब-श्छगण्डः पृष्ठवंशः शिखिबाहो युगन्धरः ।
मुखबिन्दुर्बलिर्घण्टी योद्धा त्रिलोचनप्रियः ॥ ब ॥ ४८ ॥

१ भो द्विरण्डो नाभिभद्रो भीमो भाषणमेव च ।
दक्षस्कन्दो महाबाहुर्भ्रमरस्तु जयाभिधः ॥ भ ॥ ४९ ॥
महाकाली समुद्राख्यः कालसंज्ञो विषान्तकः ।
४ कृतान्तः कुधि(षि)तः पुंसो यमश्च कालभद्रकः ॥ म ॥ ५० ॥
यः कृतीशो युगान्तश्च बालीशो वायुसंज्ञकः ।
वायुवेगी तथा शीघ्रः श्वसनः प्राणसंज्ञकः ॥ य ॥ ५१ ॥
रो भुजङ्गो धातुरक्तः सूर्यो वै वेदकस्तथा ।
८ दीपको ज्वलनश्चैव स्थूलदण्डश्च तैजसः ॥ र ॥ ५२ ॥
लः पिनाकी सितश्चन्द्रः पृथ्वीबीजं प्रकीर्त्तितः ।
पूतना पीतशिखिनः लकारवाचकः स्मृतः ॥ ल ॥ ५३ ॥
वः खड्गीशः स्वायुयुतो(?) वज्रस्फिक् मुखमेव हि ।
१२ वरुणः सागरश्चैव जगद् भाषा शुचिस्तथा ॥ व ॥ ५४ ॥
शः शकारोऽथ विधाता कुमारश्चैव मन्मथः ।
श्रीकण्ठः पवनो देवो वामोरुः कामरूपकः ॥
विशेषः कामरूपी च सौख्यदाता शुचिस्तथा ॥ श ॥ ५५ ॥
१६ षः श्वेत उष्मा सूर्याग्निरजेशः कालधूमकः ।
लम्बोदरो जठरश्च वैनायको यमस्तथा ॥ ष ॥ ५६ ॥
सकारः शक्तिनामा च चन्द्रपिण्डः शशी तथा ।
प्रकृतिर्मूर्त्तिरेवाशुरीश्वरः शक्तिरूपकः ॥
२० जगद्बीजं जलाख्यश्च परमात्माऽमृतः स्मृतः ॥ स ॥५७॥
हो नकुलीशः प्राणेशः प्राणः सम्वित् तथात्मजः ।
अम्बिकापतिरात्मा च जीवो हंसः प्रकीर्त्तितः ॥

१ नागलोकोऽमलाख्यश्च शिवः शान्तिदसंज्ञकः ॥ ह ॥ ५८ ॥
क्रोधः कोपः चकारश्च आत्मा स्त्री कामरूपकः ।
संहारो नारसिंहोऽथ महातेजो युगान्तकः ॥
४ क्षयः संवर्त्तकः प्रोक्तः सर्वज्ञः क्षेत्रपालकः ॥ क्ष ॥ ५९ ॥

॥ इति मातृका-निर्घण्टः समाप्तः ॥

---

अथ प्रकारान्तर-

# वर्णनिघण्टुः

प्रणम्य परमानन्दं श्रीगुरुं पुरुषोत्तमम् ।
मातृकार्णा-निघण्टुं यं प्रवक्ष्ये बालबुद्धये ॥ १ ॥

॥ ॐ ॥

प्रणवस्तारकोऽव्यक्तो वेदादिश्च शिवोऽव्ययः ।
आदिमश्च ध्रुवोङ्कारौ मूलज्योतिः शिवादिकः ।
त्रिवृद् ब्रह्मा त्रिमात्रश्च शब्दाः प्रणववाचकाः ॥ २ ॥

॥ अ ॥

स्वराद्यो मातृकाद्यश्च वातः कण्ठोऽमृतेश्वरः ।
विघ्नेश्वरो निवृत्तिश्च श्रीकण्ठः केशवो लघुः ॥ ३ ॥

॥ आ ॥

मुखवृत्तं गुरुः शेषो दीर्घोऽनन्तो मरुत् तथा ।
नारायणो विघ्नराजः प्रतिष्ठा च द्वितीयकः ॥ ४ ॥

॥ इ ॥

माधवः सूक्ष्म-विद्याऽग्निर्द्विबिन्दुर्दक्षलोचनः ।
गन्धर्वः पाञ्चजन्यस्तु इकारस्तु मखाङ्कुरः ॥ ५ ॥

॥ ई ॥

नृसिंहास्त्रं शान्ति-माये गोविन्दश्च सुरेश्वरः ।
त्रिमूर्त्तिर्वामनयनो वह्निरीकारकः स्मृतः ॥ ६ ॥

॥ उ ॥

विजयो मन्मथो विष्णुर्विघ्नकृच्छङ्करेन्धिके ।
गजाङ्कुशो दक्षकर्णो वृत्ताद्रिरमरेश्वरः ॥ ७ ॥

॥ ऊ ॥

षण्मुखः क्षमा विघ्नहर्त्ता अर्धीशो मधुसूदनः ।
दीपिका वामकर्णेन्द्र-चापाः षष्ठस्वरः स्मृतः ॥ ८ ॥

॥ ऋ ॥

विघ्नराड् देवमाता च रिपुघ्नो रेचिका जलम् ।
भारभूतिर्दीर्घमुखी दक्षनासस्त्रिविक्रमः ॥ ९ ॥

॥ ॠ ॥

मोचिका गोमुखी वाम-नासो दैवज्ञ-वामनौ ।
दैत्यमाताऽतिथीशश्च वारिधि(णि?)र्गणनायकः ॥ १० ॥

॥ ऌ ॥

परा स्थाणुर्दीर्घजिह्वा श्रीधरो दक्षगण्डकः ।
त्रिवेदकश्च वामार्धो विभुरेकाङ्घ्रिको ल्वु · · · · ॥११॥

॥ ॡ ॥

सूक्ष्मा हर्षा हृषीकेशो खं त्रिकूटो द्विदन्तकः ।
कृशोदरी हरीशश्च नीलाङ्घ्रिश्च कुबेर-दृक् ॥ १२ ॥

॥ ए ॥

सूक्ष्मामृता पद्मनाभो झीण्टीशो गजवक्त्रकः ।
चरः शक्तिः कामरूपः त्रिकोणोर्ध्वाधरो भगम् ॥ १३ ॥

॥ ऐ ॥

ज्ञानामृता वर्म-शुची दामोदर-निरञ्जनौ ।
वाग्धरौ भौतिकेशो वागीशस्त्रिपुरश्च ऐ ॥ १४ ॥

॥ ओ ॥

आप्यायनी वासुदेवश्चोर्ध्वदन्तस्त्रिमातृकः ।
रथः कपर्दी भुवनं मन्त्रेश ओ-स्वरः स्मृतः ॥ १५ ॥

॥ औ ॥

अनुग्रहो दीर्घवक्त्रो मायी सङ्कर्षणश्च खम् ।
मुरारिर्व्यापिनी चाधोदन्तगो नृहरेर्वपुः ॥ १६ ॥

॥ अं ॥

अनुस्वारो व्योमरूपः प्रद्युम्नः शङ्कुकर्णकः ।
अक्रूरः स्थिति-संज्ञश्च बिन्दु-चन्द्रौ च अं-स्वरः ॥ १७ ॥

॥ अः ॥

सर्गो विसर्गो बिन्द्वन्तो महासेनानिरुद्धकौ ।
पूर्णामृता तथानन्ता अः-स्वरस्तु वृषध्वजः ॥ १८ ॥

॥ क ॥

ब्रह्म सृष्टिः खादिमश्च क्रोधीशश्च स्वरान्त(ङ्क)कः ।
दक्षिणो मूलगश्चक्री कामाख्यो गणनायकः ॥ १९ ॥

॥ ख ॥

खेटो गजेन्द्रश्चण्डीशो दक्षकूर्परगो गदी ।
कैटभारिश्च मातङ्गो बुद्धिः कान्तश्च खार्णकः ॥ २० ॥

॥ ग ॥

सिंहः पञ्चान्तकः शार्ङ्गी गोमुखः शूर्पकर्णकः ।
गजकुम्भः स्मृतिः खान्तो गकारो मणिबन्धनः ॥ २१ ॥

॥ घ ॥

मेधा खड्गी(ण्डी) त्रिनेत्रश्च दक्षिणाङ्गुलिमूलगः ।
शिवोत्तमो घनो गान्तो धनकामश्च घार्णकः ॥ २२ ॥

॥ ङ ॥

१ कान्तिर्लम्बो घ(ध)नः शङ्खी दक्षाङ्गुल्यग्रगस्तथा ।
एकरुद्रश्च भद्रेशो क्लीबवक्त्रानुनासिकौ ॥ २३ ॥

॥ च ॥

हली कूर्मेश्वरो लक्ष्मीर्महानादश्च चञ्चलः ।
४ चित्रचारी चामराख्यो वामदो मूलगश्च चः ॥ २४ ॥

॥ छ ॥

चतुर्मूर्त्तिस्त्रिबिन्दुश्च मुषली वामकूर्परः ।
श्लेषान्तको द्युतिश्चैकनेत्रो वान्तश्छकार्णकः ॥ २५ ॥

॥ ज ॥

सदाशिवः स्थिरा शूली जयन्तश्चतुराननः ।
८ जनको जयजो वाम-मणिबन्धगतो जकः ॥ २६ ॥

॥ झ ॥

आमोदश्च स्थितिः पाशी अजेशो जाल-चन्द्रकौ ।
वामाङ्गुलिगतो जान्तो झङ्कारो झार्णसंज्ञकः ॥ २७ ॥

॥ ञ ॥

ज्ञप्तिर्निरञ्जनः सिद्धो भ्रान्तः सर्वेश्वरः शुभः ।
१२ दुर्मुखश्चानुनासश्च वामाङ्गुल्यग्रगश्च ञः ॥ २८ ॥

॥ ट ॥

जरा मुकुन्दः सोमेशः सुमुखश्च गजाङ्कुशः ।
अमृताद्यस्तु बालेन्दुर्दक्षपन्मूलगष्टकः ॥ २९ ॥

॥ ठ ॥

पालिनी नन्दजः स्थायी लाङ्गलीशः कमण्डलुः ।
१६ प्रमोदः स्थविरो वामजानुगश्चन्द्रमण्डलम् ॥ ३० ॥

॥ ड ॥

एकपादो व्याघ्रपादः शुभाङ्घ्रिर्डामरेश्वरः ।
क्षान्तिर्नन्दी दारुकेशो भौमजो दक्षगुल्फगः ॥ ३१ ॥

॥ ढ ॥

घेश्वरी चार्धनारीशो नरः शङ्खान्तराकृतिः ।
ढल-ढक्कौ द्विजिह्वश्च दक्षाङ्घ्र्यङ्गुलिमूलगः ॥ ३२ ॥

॥ ण ॥

उमाकान्तो नरकजिद्रविः शूरस्त्रिरेखकः ।
निर्वाणस्त्रिगुणो दक्षपादाग्रश्च ण-कारकः ॥ ३३ ॥

॥ त ॥

वामोरुर्मूल गोविन्दावाषाढी कामिको हरिः ।
तीव्रश्च तरलो नीलो णान्तः स्थादिस्त-कारकः ॥ ३४ ॥

॥ थ ॥

वामजानुगतः सौरिर्विशालाक्षश्च षण्मुखः ।
कृष्णश्च वरदो दण्डी स्थविरस्थार्णको मतः ॥ ३५ ॥

॥ द ॥

धाता च धादिमः सत्यः कुवेरो ह्लादिनी ततः ।
अत्रीशो वरदः शूलो वामगुल्फो ध-कारकः ॥ ३६ ॥

॥ ध ॥

धरणीशश्च धर्मेशः प्रीतिर्मीनेश-सात्वतौ ।
वामपादाङ्गुलिगतो वामदेवश्च दान्तिमः ॥ ३७ ॥

॥ न ॥

वामपादाग्रगः शौरी मेषेशौ नन्दि-नाटकौ ।
वक्त्रतुण्डश्च दीर्घा च नकारो नदीनायकः ॥ ३८ ॥

॥ प ॥

तीक्ष्णा द्विरण्डः पद्मेशो नान्तिमः शूर-लोहितौ ।
दक्षपार्श्वगतः फादिः प्रचण्डश्च प-कारकः ॥ ३९ ॥

॥ फ ॥

वामपार्श्वगतो रौद्री शिखीशश्च जनार्दनः ।
सेनानी पान्तिमो बादिः फट्कारश्च फ-कारकः ॥ ४० ॥

॥ ब ॥

वज्रमुष्टिर्भया भादिर्भूधरः पृष्ठवंशगः ।
ग्रामणीश्छगलण्डेशः सुरसश्च ब-कारकः ॥ ४१ ॥

॥ भ ॥

द्विरण्डेशो विश्वमूर्त्तिर्निद्रा मान्तो भयावहः ।
भृकुटीशो भरद्वाजो नाभिगश्च भ-कारकः ॥ ४२ ॥

॥ म ॥

प्र(वि)मत्तो मण्डलं मारी महाकालो विषं रविः ।
मन्त्रेशो जाठरस्तन्द्री वैकुण्ठश्च म-कारकः ॥ ४३ ॥

॥ य ॥

त्वग्गतो हृद्गतो मत्तो वाहनः पुरुषोत्तमः ।
क्षुधा मृगेन्द्रो यमुना बालीशो यामुनो मरुत् ॥ ४४ ॥

॥ र ॥

दक्षांशगो भुजङ्गेशो रोचिष्मान् रुचिरः शिखी ।
बली रक्तं क्रोधिनी च जटी यान्तो र-कारकः ॥ ४५ ॥

॥ ल ॥

मुण्डी ककुद्गतो मांसं पिनाकीशो बलानुजः ।
क्रियेन्द्रौ लम्पटो भूमिर्वायवीयो ल-कारकः ॥ ४६ ॥

॥ व ॥

बालो वामांश-खड्गीशावुत्कारी वरुणो जलम् ।
लान्तश्च वारिदो मेदः सुधा धेनुर्व-कारकः ॥ ४७ ॥

॥ श ॥

वृषघ्नः शङ्ख(ङ्कु)कर्णी च मृत्युरूपो वकेश्वरः ।
अस्थ्यात्मा च वरेण्यश्च वान्तो हृद् दक्षहस्तगः ॥ ४८ ॥

॥ ष ॥

वृषकेतुर्वृषः पीता श्वेतेशश्च षडाननः ।
हृद् दाम बाहुगो मज्जा षड़ाकारः ष-कारकः ॥ ४९ ॥

॥ स ॥

दक्षप्रियो भृगुः शुक्रो हंसः समय-सामगौ ।
हृदो दक्षिणपादस्थः श्वेता शक्तिर्निशाकरः ॥ ५० ॥

॥ ह ॥

मेघनादो नभः प्राणो हृदो वामपदस्थितः ।
हयग्रीवोऽरुणोऽनन्तो वराहो नकुली शिखा ॥ ५१ ॥

॥ ळ ॥

उपान्त्यो गणपालश्च शिवेशो विमलो लघुः ।
हृदयान्नाभिगो जीवोऽसिता चैव ल-कारकः ॥ ५२ ॥

॥ क्ष ॥

हृदयान्मुखगो व्यापी संवर्त्तक-नृसिंहकौ ।
अनन्ताख्यो गणेशश्च मेरुर्वज्रतनुः क्षकः ॥ ५३ ॥
वर्णोद्भवा मूर्त्तिभेदा नामभेदास्तथैव च ।
रुद्रयामलतन्त्रोक्ता मयोक्ता गुर्वनुज्ञया ॥ ५४ ॥

१ अकारादि-चकारान्ता वर्णसंज्ञा गुरूक्तितः।
ग्रथिता सुखबोधेन मन्त्रोद्धाराय मन्त्रिणः॥ ५५ ॥

अथ कादिमते प्रोक्ता संज्ञा भूतलिपिक्रमात्।
४ वातो मरुच्चरः प्राणो वायुर्नादो रयो जवी॥
व्याप्तं स्पर्शो वायुजानां संज्ञा प्रोक्ता मनीषिभिः॥ ५६ ॥
अग्निर्वह्निः शुचिस्तेजः प्रभा दावः शिखी द्युतिः।
दाहो श्वासश्च संज्ञोक्ता वह्न्यर्णानां क्रमादियम्॥ ५७ ॥
८ धरा क्ष्मा भूः स्थिरा ज्या कुर्गोत्रा भूमी रसा इला।
दशानां भूमिवर्णानां संज्ञा प्रोक्ता विचक्षणैः॥ ५८ ॥
जलं वारि वनं वाः कं पाथस्तोयं रसोऽम्बु हृत्।
दशानां जलवर्णानां संज्ञोक्ता पूर्वसूरिभिः॥ ५९ ॥
१२ विभुः खं स्वर्युरभ्रं च व्योम शून्यं नभो वियत्।
हंसश्चाकाशवर्णानां संज्ञा मायाविसर्गिणः॥ ६० ॥
एषा स्वतन्त्रतन्त्रोक्ता वर्णसंज्ञा समीरिता॥ ६१ ॥

इति रुद्रयामलतन्त्रोक्त-वर्णनिघण्टुः
समाप्तः

---

अथ

भूतडामरतन्त्रोक्त-

# बीजाभिधानम्



१ बीजसंकेतबोधार्थमाहृत्य तन्त्रशास्त्रतः ।
बीजनामानि कतिचिद् वक्ष्यामि विदुषां मुदे ॥
क्षतजस्थो व्योमवक्त्रो धूम्रभैरव्यलङ्कृतः ।
४ नादबिन्दु-समायुक्तो बीजं प्राथमिकं स्मृतम् ॥
माया लज्जा परा सम्वित् त्रिगुणा भुवनेश्वरी ।
हृल्लेखा शम्भुवनिता शक्तिर्देवीश्वरी शिवा ॥
महामाया पार्वती च संस्थानकृतरूपिणी ।
८ परमेश्वरी च भुवनाधात्री जीवनमध्यगा ॥ ह्रीं ॥
वह्निहीनेन्द्रयुङ् माया स्थिरमाया प्रकीर्त्तिता ॥ हीं ॥
शाग्नि-शान्ति-बिन्दुनादैर्लक्ष्मीप्रणव उच्यते ।
श्रीर्लक्ष्मीर्विष्णुवनिता रमा क्षीरसमुद्रजा ॥ श्रीं ॥
१२ षोड़शव्यञ्जनं वह्नि-वामाक्षि-बिन्दु-संयुतम् ।
चन्द्रबीज-समारूढं वधूबीजमिदं स्मृतम् ॥
वधूर्वामेक्षणा योषिदेकाक्षी स्त्री च कामिनी ॥ स्त्रीं ॥

नादबिन्दु-समायुक्तो द्वादशस्तु स्वरो भगः ।
योनिः सरस्वतीबीजमधरं वाग्भवं च वाक् ॥ ऐं ॥
हंकारो वामकर्णाढ्यो नादबिन्दु-विभूषितः ।
कूर्चं क्रोध उग्रदर्पो दीर्घहूङ्कार उच्यते ॥
शब्दश्च दीर्घकवचं ताराप्रणव इत्यपि ॥ हूं ॥
कामाक्षरं वह्निसंस्थं रतिबिन्दुविभूषितम् ।
कालीबीजमिदं प्रोक्तं रतिबीजं तदेव हि ॥ क्रीं ॥
कामाक्षरं धरासंस्थं रतिबिन्दुविभूषितम् ।
गुह्यकालीबीजमिदं गोपालबीजमित्यपि ॥
तत् कामबीजं कामेशीबीजं शक्तिस्त्वसौ परा ॥ क्लीं ॥
सत्यान्तयुग् व्योम सेन्दु शैवं प्रासादमुच्यते ॥ हौं ॥
कलाद्यं क्लेदिनीबीजं ॥क्लूह्रीं॥ क्रोङ्कारस्त्वङ्कुशाभिधः ॥क्रों
आकारो बिन्दुमान् पाशः शेषश्च समुदीरितः ॥ आं ॥
सकला भुवनेशानी कामेशीबीजमुच्यते ॥ क्लूह्रीं ॥
नमस्तु हृदयं ॥ नमः ॥ स्वाहा द्विठष्ठयुगलं ठठः ।
चन्द्रयुग्मं शिवो वेदमाता ज्वलनसुन्दरी ॥
स्वाहा परा देवभोज्यं ठद्वयं चन्द्रयुग्मकम् ।
ध्रुवो हविर्वेदमाता देवास्यं वह्निसुन्दरी ॥ स्वाहा ॥
शिखा वषट् शिरोमध्यं शक्रमाता हरप्रिया ।
शिखा वषट् च ॥ वषट् ॥ कवचं क्रोधो वर्म हुमित्यपि
क्रोधाख्यो हूं तनुत्रश्च शस्त्रादौ रिपुसंज्ञकः ॥ हूं ॥
अस्त्रनेत्रयुगं वौषट् ॥ वौषट् ॥ फड़स्त्रं शस्त्रमायुधम् ॥फट

१ तार्तीयन्तु हेसौः प्रेतबीजं ॥हेसौः॥ हंसोऽजपामनुः ॥हंसः॥
गकारो बिन्दुमान् विघ्नरा(बी)जं गणेशबीजकम् ॥ गं ॥
स्मृतिस्थं मांसमौबिन्दुयुतं भूबीजमीरितम् ॥ ग्लौं ॥
४ ठान्तं हनन-नेत्रेन्दु-युतन्तु विम्बबीजकम् ॥ ड्रीं ॥
अथ कामकला वामनयनं बिन्दु-संयुतम् ।
अर्कमाता कला वाणी नादोऽर्धेन्दुः सदाशिवः ॥
अनुच्चार्या तुरीया च विश्वमातृकला परा ॥ ॐ-नादः ॥

अथ भूतडामरतन्त्रोक्त-बीजनामानि

८ प्रणवो विषबीजं स्याद् ध्रुवं हालाहलं स्मृतम् ।
कालः श्रुतिमुखं ज्ञेयं बहुरूपि निरञ्जनम् ॥ प्रणवम् ॥
क्षतजस्थो व्योमवक्त्रो धूम्रभैरव्यलङ्कृतः ।
नादबिन्दु-समायुक्तो बीजं प्राथमिकं स्मृतम् ॥ ह्रीं ॥
१२ क्रोधीशः क्षतजारूढो धूम्रभैरव्यलङ्कृतः ।
नादबिन्दुसमायुक्तः पितृभूवासिनी स्मृतः ॥ क्रीं ॥
क्रोधकालात्मकं कुर्याद् भौतिकं वाग्भवं स्मृतम् ।
नादबिन्दु-समायुक्तं समादायोग्रभैरवीम् ॥
१६ बीजमेतत्तु कथितं शुद्धबुद्धि-प्रवर्त्तकम् ॥ ऐं ॥
क्रोधीशो बलभिद्-धूम्रभैरवी-नादबिन्दुभिः ।
त्रिमूर्त्तिर्मन्मथः कामराजस्त्रैलोक्यमोहनम् ॥क्लीं ॥
इन्द्रासनगतो ब्रह्मा सत्रिमूर्त्तिस्तु मन्मथः ॥ क्लीं ॥
२० संयुक्तं धूम्रभैरव्याः रक्तस्थं बलिभोजनम् ।
नादबिन्दु-समायुक्तं किङ्किणीबीजमुत्तमम् ॥ क्रीं ॥

१ नादबिन्दु-समायुक्तं रक्तस्थं बलिभोजनम् ।
कालरात्र्यासनोपेतं विशिखाख्यं महामनुम् ॥ द्रुं ॥
विदार्यालिङ्गितो गुह्ये वलिभुक्क्षतजोक्षितः ।
४ नादबिन्दु-समायुक्तो विज्ञेयः पिशिताशनः ॥ द्रूं ॥
धूमध्वजः करालाग्निः सोर्ध्वकेशीन्दु-बिन्दुभिः ।
युगान्तकारकं बीजं भैरवेण प्रकाशितम् ॥ स्फें ॥
कपर्दिनं समादाय क्षतजोक्षितविग्रहम् ।
८ संयुक्तं धूम्रभैरव्या ध्वाङ्क्षोऽयं नादबिन्दुमान् ॥ श्रीं ॥
कपालीद्वयमादाय महाकालेन मण्डितम् ।
पुनस्तद्द्वयमित्युक्तं चण्डिकाढ्यं मनोहरम् ॥ ठंठं ठःठः ॥
क्षतजस्थं व्योमवक्त्रं चन्द्रखण्डविभूषितम् ।
१२ खद्योतमिति संप्रोक्तं ग्रासिनी कालरात्रियुक् ॥ ह्वं ह्वुं ॥
क्षतजोक्षितमाकाशं नादबिन्दु-विभूषितम् ।
विदारीभूषितं चैव बीजं वैवस्वतात्मकम् ॥ ह्रूं ॥
कीर्त्याख्या कालवक्त्रा च महाकालेन भूषिता ।
१६ तपनादिपञ्चरश्मिः सृष्टिस्थित्यन्तकृद् विधिः ॥ ॐ ॥
व्योमस्थं ना(ता)लजङ्घास्थं बिन्दुनादविभूषितम् ।
कूर्चं कालो महाकालः क्रोधबीजं निरञ्जनम् ॥ हूं ॥

इति भूतडामरतन्त्रोक्त-
बीजाभिधानं
समाप्तम्

अथ

वरदातन्त्रोक्त-

# मन्त्रार्थाभिधानम्



शिव उवाच ।

१ मन्त्रार्थं कथयाम्यद्य शृणुष्व परमेश्वरि ।
विना येन न सिद्ध्येत्तु साधनैः कोटिशः शिवे ॥
आदौ प्रासादबीजस्य मन्त्रार्थं शृणु पार्वति ।
४ शिववाची हकारस्तु औकारः स्यात् सदाशिवः ॥
शून्यं दुःखहरार्थन्तु तस्मात्तेन शिवं यजेत् ॥ हौं ॥
द दुर्गावाचकं देवि उकारश्चापि रक्षणे ।
विश्वमाता नादरूपः कुर्वर्थो बिन्दुरूपकः ॥
८ तस्मात्तेनैव बीजेन दुर्गामाराधयेच्छिवे ॥ दूं ॥
क काली ब्रह्म र प्रोक्तं महामायार्थकश्च ई ।
विश्वमात्रर्थको नादो बिन्दुर्दुःखहरार्थकः ॥
तेनैव कालिकादेवीं पूजयेद् दुःखशान्तये ॥ क्रीं ॥
१२ हकारः शिववाची स्यात् रेफः प्रकृतिरुच्यते ।
महामायार्थ ई-शब्दो नादो विश्वप्रसूः स्मृतः ॥
दुःखहराथको बिन्दुर्भुवनान्तेन पूजयेत् ॥ ह्रीं ॥
महालक्ष्म्यर्थकः शः स्याद् धनार्थो रेफ उच्यते ।
१६ ईस्तुष्ट्यर्थो परो नादो बिन्दुर्दुःखहरार्थकः ॥

लक्ष्मीदेव्या बीजमेतत्तेन देवीं प्रपूजयेत् ॥ श्रीं ॥
सरस्वत्यर्थ ऐ-शब्दो बिन्दुर्दुःखहरार्थकः ।
सरस्वत्या बीजमेतत्तेन वाणीं प्रपूजयेत् ॥ ऐं ॥
कः कामदेव उद्दिष्टोऽप्यथवा कृष्ण उच्यते ।
ल इन्द्र ई तुष्टिवाची सुखदुःखप्रदश्च अं ॥
कामबीजार्थ उक्तस्ते तव स्नेहान्महेश्वरि ॥ क्लीं ॥
हः शिवः कथितो देवि भ भैरव इहोच्यते ।
परार्थो नादशब्दस्तु बिन्दुर्दुःखहरार्थकः ॥
वर्मबीजत्रयो ह्यत्र कथितस्तव यत्नतः ॥ हूं ॥
गणेशार्थो ग उक्तस्ते बिन्दुर्दुःखहरार्थकः ।
गं बीजार्थन्तु कथितं तव स्नेहान्महेश्वरि ॥ गं ॥
ग गणेशव्यापकार्थो लकारस्तेज औ मतः ।
दुःखहरार्थको बिन्दुर्गणेशं तेन पूजयेत् ॥ ग्लौं ॥
क्ष नृसिंहो ब्रह्म रश्च ऊर्ध्वदन्तार्थकश्च औ ।
दुःखहरार्थको बिन्दुर्नृसिंहं तेन पूजयेत् ॥ क्ष्रौं ॥
नामादिवर्णाः सर्वेषां नाम उक्तं स्वयम्भुवा ।
तेनैवार्थन्तु जानीयादर्थलभ्यन्तु चिन्तयेत् ॥
यथायथं विभक्त्यन्तं मन्त्रार्थे चिन्तयेच्छिवे ।
तत्तद्वर्णादियोगेन संक्षेपात् कथितं त्वयि ॥
दुर्गोत्तारणवाच्यः स तारकार्थस्तकारकः ।
मुक्त्यर्थो रेफ उक्तोऽत्र महामायार्थकश्च ई ॥
विश्वमात्रर्थको नादो बिन्दुर्दुःखहरार्थकः ।

१ वधूबीजार्थ उक्तोऽत्र तव स्नेहान्महेश्वरि ॥ स्त्रीं ॥
यत्र बिन्दुद्वयं मन्त्रे एकं दुःखहरार्थकम् ।
अन्यत् सुखप्रदं देवि ज्ञात्वा चार्थं विचिन्तयेत् ॥
४ यत्र बिन्दुद्वयं मन्त्रे अन्यत् पूर्णार्थकं मतम् ।
स्वाहामात्रार्थका देवि परार्था वा प्रकीर्त्तिता ॥
शक्रमाता वषट् प्रोक्ता हरिप्रियार्थका गिरा ।
सुरार्था फट् हयग्रीवे विप्रिं बीजं विनिर्दिशेत् ॥
८ यं बीजं वायुवाची स्यात् लमैन्द्रं परिकीर्त्तितम् ।
अनेकाक्षरबीजे च स्वस्वबीजं स्वनामकम् ॥
एवं ज्ञात्वा महेशानि मन्त्रार्थं परिचिन्तयेत् ।
एकबीजद्वयं यत्र पृथगर्थं प्रकल्पयेत् ॥
१२ वीप्सार्थं वा महेशानि ज्ञात्वा मन्त्रं जपेद्धिया ।
इति ते कथितो देवि मन्त्रार्थः परमेश्वरि ॥

इति वरदातन्त्रोक्त-मन्त्रार्थाभिधानं
समाप्तम्

---

अथ

# मुद्रानिघण्टुः



अथ मुद्राः[1] प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताः ।
याभिर्विरचिताभिश्च मोदन्ते मन्त्रदेवताः ॥ १ ॥
अर्च्चने जपकाले च ध्याने काम्ये च कर्मणि ।
स्नाने चावाहने शङ्खे प्रतिष्ठायाञ्च रक्षणे ॥ २ ॥
नैवेद्ये च तथान्ने च तत्तत्कल्पप्रकाशिते ।
स्थाने मुद्राः प्रकर्त्तव्याः स्वस्वलक्षणसंयुता ॥ ३ ॥
आवाहनादिका मुद्रा नव साधारणा मताः ।
तथा षड़ङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत् ॥ ४ ॥
एकोनविंशतिर्मुद्रा विष्णोरुक्ता मनीषिभिः ।
शङ्खचक्रगदापद्मवेणुश्रीवत्सकोस्तुभाः ॥ ५ ॥
वनमाला तथा ज्ञानमुद्रा विल्वाह्वया तथा ।
गरुड़ाख्या परा मुद्रा विष्णोः सन्तोषदायकाः ॥ ६ ॥
नारसिंही च वाराही हयग्रैवी धनुस्तथा ।
वाणमुद्रा ततः पर्शुर्जगन्मोहनिका परा ॥ ७ ॥

---

[1] मुद्रापदव्युत्पत्तिमाह यामले—

मोदन तु सर्वदेवानां द्रावणात् पापसन्ततेः ।
तस्मान्मुद्रेति सा ख्याता सर्वकामार्थसाधनी ॥

काममुद्रा पराख्याता शिवस्य दशमुद्रिकाः ।
लिङ्गयोनित्रिशूलाक्षमालेष्टाभीमृगाह्वयाः ॥ ८ ॥
खट्वाङ्गा च कपालाख्या डमरुः शिवतोषदाः ।
सूर्य्यस्यैकैव पद्माख्या सप्तमुद्रा गणेशितुः ॥ ९ ॥
दन्तपाशाङ्कुशाविघ्नपर्शुर्लड्डुकसंज्ञिताः ।
बीजपूराह्वया मुद्रा विज्ञेया विघ्नपूजने ॥ १० ॥
पाशाङ्कुशवराभीतिखड्गचर्मधनुःशराः ।
मौषली मुद्रिका दौर्गी मुद्राः शक्तेः प्रियङ्कराः ॥ ११ ॥
मुद्गरः पाशवज्राख्या जिह्वा ब्राह्मी तथैव च ।
पञ्चमुद्राः समाख्याता ब्रह्मास्त्रजपपूजने ॥ १२ ॥
लक्ष्मीमुद्रार्च्चने लक्ष्म्या वाग्वादिन्यास्तु पूजने ।
अक्षमाला तथा वीणा व्याख्यापुस्तकमुद्रिके ॥ १३ ॥
सप्तजिह्वाह्वया मुद्रा विज्ञेया वह्निपूजने ।
मत्स्यमुद्रा च कूर्माख्या लेलिहा मुण्डसंज्ञिका ॥ १४ ॥
महायोनिरिति ख्याता सर्वसिद्धिसमृद्धिदा ।
शक्त्यर्चने महायोनिः श्यामादौ मुण्डमुद्रिका ॥ १५ ॥
मत्स्यकूर्मलेलिहाख्या मुद्रा साधारणी मता ।
तारार्चने विशेषास्तु कथ्यन्ते पञ्चमुद्रिकाः ॥ १६ ॥
योनिश्च भूतिनी चैव बीजाख्या दैत्यधूमिनी ।
लेलिहानेति संप्रोक्ताः पञ्चमुद्राः विलोकिताः ॥ १७ ॥
दशमुद्राः समाख्यातास्त्रिपुरायाः प्रपूजने ।
संक्षोभद्रावणाकर्षवश्योन्मादमहाऽङ्कुशाः ॥ १८ ॥

खेचरी बीजयोन्याख्या त्रिखण्डा दश कीर्त्तिताः ।
कुम्भमुद्राऽभिषेके स्यात् पद्ममुद्रा तथासने ॥ १९ ॥
कालकर्णी प्रयोक्तव्या विघ्नप्रशमकर्मणि ।
गालिनी च प्रयोक्तव्या जलशोधनकर्मणि ॥ २० ॥
श्रीगोपालार्च्चने वेणुर्नृहरेर्नारसिंहिका ।
वराहस्य च पूजायां वाराहाख्यां प्रदर्शयेत् ॥ २१ ॥
हयग्रीवार्च्चने चैव हयग्रैवीं प्रदर्शयेत् ।
रामार्च्चने धनुर्वाणमुद्रे पर्शुस्तथार्च्चने ॥ २२ ॥
पर्शुरामस्य विज्ञेया जगन्मोहनसंज्ञिका ।
जगन्मोहनपूजायां काममुद्रा तदर्च्चने ॥ २३ ॥
वासुदेवाह्वगाह्वा(ध्या)ने कुम्भमुद्रा तु रक्षणे ।
सर्वत्र प्रार्थने चैव प्रार्थनाख्यां प्रदर्शयेत् ॥ २४ ॥
उद्देशानुक्रमादायोच्यन्ते तल्लक्षणानि च ।
हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिकामूलपर्वणोः ॥ २५ ॥
अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता ।
अधोमुखी त्वियं चेत् स्यात् स्थापनी मुद्रिका स्मृता ॥२६
उच्छ्रिताङ्गुष्ठमुष्टयोश्च संयोगात् सन्निधापनी ।
अन्तःप्रवेशिताङ्गुष्ठा सैव संबोधिनी मता ॥ २७ ॥
उत्तानमुष्टियुगला सम्मुखीकरणी मता ।
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ॥ २८ ॥
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥ २९ ॥

अन्योन्याभिमुखाश्लिष्टा कनिष्ठाऽनामिका पुनः ।
तथैव तजनी मध्या धेनुमुद्रेयमीरिता ॥ ३० ॥
अमृतीकरणं कुर्यात्तया साधकसत्तमः ।
अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ॥ ३१ ॥
महामुद्रेयमुदिता परमीकरणे बुधैः ।
प्रयोजयेदिमा मुद्रा देवताऽऽह्वानकर्मणि ॥ ३२ ॥
अङ्गन्यासक्षमा मुद्रास्तासां लक्षणमुच्यते ॥ ३३ ॥
अनङ्गुष्ठा ऋजवो हस्तशाखा
भवेन्मुद्रा हृदये शीर्षके च ।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां
करद्वन्द्वाङ्गुलयो वर्मणि स्युः ॥ ३४ ॥
नाराचमुष्ट्युद्धृतबाहुयुग्म-
काङ्गुष्ठतर्जन्युदितोध्वनिस्तु ।
विष्वक् विषक्तः कथिताऽस्त्रमुद्रा
यत्राक्षिणी तर्जनिमध्यमे स्तः ॥ ३५ ॥
नेत्रत्रयं यत्र भवेदनामा
षडङ्गमुद्रा कथिता विधिज्ञैः ॥ ३६ ॥
अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत् ।
वैष्णवानान्तु मुद्राणां कथ्यन्ते लक्षणान्यथ ॥ ३७ ॥
वामङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानां ततो मुष्टिमङ्गुष्ठन्तु प्रसारयेत् ॥ ३८ ॥
वामाङ्गुलयस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः ।

दक्षिणाङ्गुष्ठसंस्पृष्टाः शङ्खमुद्रेयमीरिता ॥ ३६ ॥
हस्तौ तु सम्मुखौ कृत्वा सन्नतप्रोथिताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठौ सुभुग्नौ सुप्रसारितौ ॥ ४० ॥
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिका ।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ॥ ४१ ॥
अङ्गुल्यौ मध्यमे भूयः सुलग्ने सुप्रसारिते ।
गदामुद्रेयमाख्याता विष्णोः सन्तोषवर्द्धिनी ॥ ४२ ॥
हस्तौ तु सम्मुखौ कृत्वा सन्नतावुन्नताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठौ मुद्रैषा पद्मसंज्ञिका ॥ ४३ ॥
ओष्ठे वामकराङ्गुष्ठो लग्नस्तत्र कनिष्ठिका ।
दक्षिणाङ्गुष्ठसंलग्ना तत्कनिष्ठा प्रसारिता ॥ ४४ ॥
तर्जनीमध्यमानामाः किञ्चित् सङ्कोच्य चालिताः ।
वेणुमुद्रा भवेदेषा सुगुप्ता प्रेयसी हरेः ॥ ४५ ॥
अन्योन्यस्पृष्टकरयोर्मध्यमानामिकाङ्गुली ।
अङ्गुष्ठेन तु बध्नीयात् कनिष्ठामूलसंश्रि(स्थि)ते ॥ ४६ ॥
तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञिका ।
अनामिकापृष्ठलग्नां दक्षिणस्य कनिष्ठिकाम् ॥ ४७ ॥
कनिष्ठयाऽन्यया बद्ध्वा तर्जन्या दक्षया तथा ।
वामामनामां बध्नीयाद्दक्षिणाङ्गुष्ठमूलके ॥ ४८ ॥
अङ्गुष्ठमध्यमे वामे संयोज्य सरलाः पराः ।
चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञिका ॥ ४९ ॥
स्पृशेत् कण्ठादिपादान्तं तर्जन्याङ्गुष्ठनिष्ठया ।

करद्वयेनमालावन्मुद्रेयं वनमालिका ॥ ५० ॥
तर्जन्यङ्गुष्ठकौ सक्तौ वक्रतो हृदि विन्यसेत् ।
वामहस्तानु(म्बु)जं वामजानुमूर्द्धनि विन्यसेत् ॥ ५१ ॥
ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी ॥ ५२ ॥
अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनापि बद्ध्वा
तस्याग्रं पीड़यित्वाङ्गुलिभिरपि च ता वामहस्ताङ्गुलीभिः ।
बद्ध्वा गाढं हृदि स्थापयतु विमलधीर्व्याहरन्मारबीजं
विल्वाख्या मुद्रिकैषा स्फुटमिह कथिता गोपनीया विधिज्ञैः ॥
हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठके ।
मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥ ५४ ॥
मध्यमानामिके द्वे तु द्वौ पक्षाविव चालयेत् ।
एषा गरुड़मुद्रा स्याद्विष्णोः सन्तोषवर्द्धिनी ॥ ५५ ॥
जानुमध्ये करौ कृत्वा चिवुकौष्ठौ समाकृतौ ।
हस्तौ तु भूमिसंलग्नौ कम्पमानौ पुनः पुनः ॥ ५६ ॥
मुखं निवृत्तकं कृत्वा लेलिहानां च जिह्विकाम् ।
नारसिंही भवेदेषा मुद्रा तत्प्रीतिवर्द्धिनी ॥ ५७ ॥
अङ्गुष्ठाभ्याञ्च करयोरथाक्रम्य कनिष्ठिके ।
अधोमुखीभिः सर्वाभिर्मुद्रेयं नृहरेः स्मृता ॥ ५८ ॥
दक्षोपरि करं वामं कृत्वोत्तानमधः सुधीः ।
आ(न)मयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिका ॥ ५९ ॥
दक्षहस्तश्चोर्द्ध्वमुखं वामहस्तमधोमुखम् ।
अङ्गुल्यग्रन्तु संयुक्तं मुद्रा वाराहसंज्ञिका ॥ ६० ॥

वामहस्ततले कृत्वा दक्षाङ्गुलिमधोमुखीम् ।
संरोप्य मध्यमानामे[१] मुखस्याधो विकुञ्चयेत् ॥ ६१ ॥
हयग्रीवप्रिया मुद्रा तन्मूर्त्तेरनुकारिणी ।
वामस्य मध्यमाग्रन्तु तर्जन्यग्रे तु योजयेत् ॥ ६२ ॥
अनामिकां कनिष्ठाञ्च तस्याङ्गुष्ठेन पीड़येत् ।
स्पर्शयेद्वामके स्कन्धे धनुर्मुद्रेयमीरिता ॥ ६३ ॥
दक्षमुष्टेस्तु तर्जन्या दीर्घया वाणमुद्रिका[२] ।
तले तलन्तु करयोस्तिर्य्यक् संयोज्य चाङ्गुलीः ॥ ६४ ॥
संहताः प्रसृताः कुर्यान्मुद्रेयं पर्शुसंज्ञिका ।
ऊर्द्धस्थाङ्गुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी ॥ ६५ ॥
हस्तौ तु सम्पुटौ कृत्वा प्रसृताङ्गुलिकौ तथा ।
तर्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमाश्रितौ ॥ ६६ ॥
काममुद्रेयमुदिता सर्वदेवप्रियङ्करी ।
सदाशिवप्रियाणाञ्च कथ्यन्ते लक्षणानि च ॥ ६७ ॥
उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन बन्धयेत् ।
वामाङ्गुलीर्दक्षिणाभिरङ्गुलीभिश्च बन्धयेत् ॥ ६८ ॥
लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ।
मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके ॥ ६९ ॥

---

१ मध्यमा तासामुन्नम्याऽध इति क्वचित् २ प्रकारान्तरवाणमुद्रालक्षणं ज्ञानार्णवे —
यथा हस्तगतं चापं तथा हस्तं कुरु प्रिये ।
चापमुद्रेयमाख्याता वामहस्ते व्यवस्थिता ॥
यथा हस्तगता वाणास्तथा हस्तं कुरु प्रिये ।
वाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तनी ॥

अनामिकोर्द्धसंश्लिष्टदीर्घमध्यमयोरधः ।
अङ्गुष्ठाग्रद्वयं न्यस्येद्‍योनिमुद्रेयमीरिता ॥ ७० ॥
अङ्गुष्ठेन कनिष्ठान्तु बद्ध्वा दत्ताङ्गुलीत्रयम् ।
प्रसारयेत् त्रिशूलाख्या मुद्रैषा परिकीर्त्तिता ॥ ७१ ॥
अङ्गुष्ठतर्जन्यग्रे तु ग्रन्थयित्वाऽङ्गुलित्रयम् ।
प्रसारयेदक्षमाला-मुद्रेयं परिकीर्त्तिता ॥ ७२ ॥
अधःकृतो दक्षहस्तः प्रसृतो वरमुद्रिका ।
ऊर्द्धीकृतो वामहस्तः प्रसृतोऽभयमुद्रिका ॥ ७३ ॥
मिलितानामिकाङ्गुष्ठे मध्यमाग्रन्तु योजयेत् ।
शिष्टाङ्गुल्युच्छ्रिते कुर्यान्मृगमुद्रेयमीरिता ॥ ७४ ॥
पञ्चाङ्गुल्यो दक्षिणास्तु मिलिता ऊर्द्धमुन्नताः ।
खट्वाङ्गमुद्रा विख्याता शिवस्यातिप्रिया मता ॥ ७५ ॥
पात्रवद्वामहस्तञ्च कृत्वा वामांसके तथा ।
निधायोच्छ्रितवत् कुर्यान्मुद्रा कापालकी मता ॥ ७६ ॥
मुष्टिञ्च शिथिलां बद्ध्वा ईषदुच्छ्रितमध्यमाम् ।
दक्षिणामूर्द्धमुत्तोल्य कर्णदेशे प्रचालयेत् ॥ ७७ ॥
एषा मुद्रा डमरुका सर्वविघ्नविनाशिनी ।
ततो गणेशमुद्राणामुच्यन्ते लक्षणानि च ॥ ७८ ॥
उत्तानोर्द्धमुखी मध्या सरला बद्धमुष्टिका ।
दन्तमुद्रा समाख्याता सर्वागमविशारदैः ॥ ७९ ॥
वाममुष्टेस्तु तर्जन्या दक्षमुष्टिस्थतर्जनीम् ।
संयोज्याऽङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे स्वके क्षिपेत् ॥ ८० ॥

एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिता ।
ऋज्वीञ्च मध्यमां कृत्वा तर्जनीं मध्यपर्वणि ॥ ८१ ॥
संयोज्याकुञ्चयेत् किञ्चिन्मुद्रैषाऽङ्कुशसंज्ञिका ।
तर्जनीमध्यमासन्धिनिःसृताङ्गुष्ठमुष्टिका[1] ॥ ८२ ॥
अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका ।
पर्शुमुद्रा निगदिता प्रसिद्धा लड्डुमुद्रिका ॥ ८३ ॥
वीजपूराह्वया मुद्राऽप्रसिद्धत्वादुपेक्षिता ।
शाक्तेयानाञ्च मुद्राणां कथ्यन्ते लक्षणानि च ॥ ८४ ॥
पाशाङ्कुशवराभीतिधनुर्वाणाः समीरिताः ।
कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः ॥ ८५ ॥
श्लिष्टाङ्गुली च प्रसृते संसृष्टे खड्गमुद्रिका ।
वामहस्तं तथा तिर्यक् कृत्वा चैव प्रसारयेत् ॥ ८६ ॥
आकुञ्चिताङ्गुलीः कुर्याच्चर्ममुद्रेयमीरिता ।
मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणाम् ॥ ८७ ॥
कुर्यान्मूषलमुद्रेयं सर्वविघ्नविनाशिनी ।
मुष्टिं कृत्वा कराभ्याञ्च वामस्योपरि दक्षिणाम् ॥ ८८ ॥
कृत्वा शिरसि संयोज्य दुर्गामुद्रेयमीरिता ।
चक्रमुद्रां तथा बद्ध्वा मध्यमे द्वे प्रसार्य च ॥ ८९ ॥
कनिष्ठिके तथानीय तदग्रेऽङ्गुष्ठकौ क्षिपेत् ।
लक्ष्मीमुद्रा तथाह्येषा सर्वसम्पत्प्रदायिनी ॥ ९० ॥

[1] तर्जनीमध्यमानामाकनिष्ठाङ्गुष्ठमुष्टिका इति क्वचिद् दृश्यते ।

मुद्गरं पाशजिह्वे चाऽप्रसिद्धत्वादुपेक्षिते ॥ ९१ ॥
वामाङ्गुष्ठमधः कृत्वा अङ्गुलीभिर्निरुध्य च।
ब्राह्मीमुद्रेति विख्याता ब्रह्मास्त्रजपकर्मणि ॥ ९२ ॥*
वीणावादनवद्धस्तौ कृत्वा सञ्चालयेच्छिरः।
वीणामुद्रा समाख्याता सरस्वत्याः प्रियङ्करी ॥ ९३ ॥
वाममुष्टिः स्वाभिमुखी वद्धा पुस्तकमुद्रिका ॥ ९४ ॥
दक्षिणाङ्गुष्ठतर्जन्यावग्रलग्ने पराङ्गुलीः।
प्रसार्य संहतोत्ताना एषा व्याख्यानमुद्रिका ॥
रामस्य च सरस्वत्या अत्यन्तप्रेयसी मता ॥ ९५ ॥
मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ।
कनिष्ठाङ्गुष्ठयुगले मिलित्वान्तः प्रसारयेत् ॥
सप्तजिह्वाख्यमुद्रेयं वैश्वानरप्रियङ्करी ॥ ९६ ॥
कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम्।
तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः ॥
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ॥ ९७ ॥
दक्षाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु।
सावकाशामेकमुष्टिं कुर्यात् सा कुम्भमुद्रिका ॥ ९८ ॥
मुष्ट्योरूर्द्ध्वौ कृताङ्गुष्ठौ तर्जन्यग्रे तु विन्यसेत्।
सर्वरक्षाकरी ह्येषा कुम्भमुद्रा समीरिता ॥ ९९ ॥
प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च सम्मुखौ।
कुर्यात् स्वहृदये चेयं मुद्रा प्रार्थनसंज्ञिका ॥ १०० ॥

* मुद्गरमित्यादिसार्धैकपद्यं क्वचिन्न दृश्यते

अञ्जल्याऽञ्जलिमुद्रा स्याद् वासुदेवप्रियैव सा ॥ १०१ ॥
अङ्गुष्ठावुन्नतौ कृत्वा मुष्ट्योः संलग्नयोर्द्वयोः ।
तावेवाभिमुखौ कुर्यात् मुद्रैषा कालकर्णिका ॥ १०२ ॥
दक्षिणामुष्टिनिविड़ा नासिकार्पिततर्जनी ।
मुद्रा विस्मयसंज्ञा स्याद् विस्मयावेशकारिणी ॥ १०३ ॥
मुष्टिरूर्द्धीकृताऽङ्गुष्ठा दक्षिणा नादमुद्रिका ।
तर्जन्यङ्गुष्ठसंयोगादग्रतो बिन्दुमुद्रिका ॥ १०४ ॥
अधोमुखे वामहस्ते ऊर्द्धास्यं दक्षहस्तकम् ।
क्षिप्त्वाऽङ्गुलीभिः संयोज्य हस्तौ तु परिवर्त्तयेत् ॥
एषा संहारमुद्रा स्याद्विसर्जनविधौ मता ॥ १०५ ॥
दक्षपाणिपृष्ठदेशे वामपाणितलं न्यसेत् ।
अङ्गुष्ठौ चालयेत् सम्यङ् मुद्रेयं मत्स्यरूपिणी ॥ १०६ ॥
वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठिकाम् ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥ १०७ ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥ १०८ ॥
कूर्मपृष्ठसमं कुर्याद् दक्षपाणिश्च सर्वतः ।
कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ॥ १०९ ॥
अन्तराङ्गुष्ठमुष्टिं तु कृत्वा वामकरस्य च ।
मध्यमाद्या दक्षिणस्य तथानम्य प्रयत्नतः ॥ ११० ॥
मध्याङ्केनाऽथ तर्जन्या अङ्गुष्ठाग्रं तु योजयेत् ।
क्षिणं योजयेत् पाणिं वाममुष्टौ तु साधकः ॥

दर्शयेद् दक्षिणे भागे मुण्डमुद्रेयमुच्यते ॥ १११ ॥
योनिमुद्रा च वक्तव्या बीजाख्यापि च भूतिनी ॥ ११२ ॥
परिवर्त्य करौ स्पृष्टौ कनिष्ठाकृष्टमध्यमे ।
अनामायुगलं चाधस्तर्जनीयुगलं पृथक् ॥ ११३ ॥
अन्योन्यं निविड़ं बद्ध्वाऽङ्गुष्ठाग्रेऽनामिके ततः ।
दानवधूमकेत्वाख्या मुद्रैषा कथिता प्रिये ॥ ११४ ॥
वक्त्रं विस्तारितं कृत्वाऽप्यधो जिह्वां च चालयेत् ।
पार्श्वस्थं मुष्टियुगलं लेलिहानेति कीर्त्तिता[1] ॥ ११५ ॥
योनिर्मायाऽधरः सेन्दुवधूः कूर्चं क्रमाद् विदुः ।
बीजानि चोच्चरन् मन्त्री मुद्राबन्धनमाचरेत् ॥ ११६ ॥
तर्जनीमध्यमानामाः समं कुर्यादधोमुखीः ।
अनामायां क्षिपेद् वृद्धामृज्वीं कृत्वा कनिष्ठिकाम् ॥
लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता ॥ ११७ ॥
तर्जन्यनामिकामध्याकनिष्ठाक्रमयोगतः ।
करयोर्योजयत्येव कनिष्ठामूलयोगतः ॥
अङ्गुष्ठाग्रे तु निःक्षिप्य महायोनिः प्रकीर्त्तिता ॥ ११८ ॥
वामकेश्वरतन्त्रोक्ताः प्रकाश्यन्तेऽत्र मुद्रिकाः ॥ ११९ ॥

श्रीशिव उवाच ।

शृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।
याभिर्विरचिताभिस्तु सान्निध्या त्रिपुरा भवेत् ॥ १२० ॥

---

१ एषा ताराऽऽराधने ज्ञेया ।

परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥ १२१ ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डेयं समाख्याता त्रिपुराह्वानकर्मणि ॥ १२२ ॥
मध्यमामध्यगे कृत्वा कनिष्ठेऽङ्गुष्ठरोधिते ।
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ॥
एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी ॥ १२३ ॥
एतस्या एव मुद्राया मध्यमे सरले यदा ।
क्रियेते परमेशानि तदा विद्राविणी भवेत् ॥ १२४ ॥
मध्यमा तर्जनीभ्यान्तु कनिष्ठानामिके समे ।
अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि ॥ १२५ ॥
अङ्गुष्ठं तु नियुञ्जीत कनिष्ठानामिकोपरि ।
इयमाकर्षणी मुद्रा त्रैलोक्याकर्षिणी मता ॥ १२६ ॥
पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।
परिवर्त्य क्रमेणैव मध्यमे तदधोगते ॥ १२७ ॥
क्रमेण देवि तेनैव कनिष्ठानामिके तथा ।
संयोज्य निबिडाः सर्वा अङ्गुष्ठस्याग्रदेशतः ॥
मुद्रेयं परमेशानि सर्ववश्यकरी मता ॥ १२८ ॥
सम्मुखौ तु करौ कृत्वा मध्यमा मध्यगेऽन्त्यजे ।
अनामिके तु सरले तद् बहिस्तर्जनीद्वयम् ॥ १२९ ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
मुद्रैषोन्मादिनी नाम क्लेदिनी सर्वयोषिताम् ॥ १३० ॥

अस्यान्त्वनामिकायुग्ममधः कृत्वाऽङ्कुशाकृति ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥
इयं महाङ्कुशा मुद्रा सर्वकामार्थसाधिनी ॥ १३१ ॥
सव्यं दक्षिणदेशे तु सव्यदेशे तु दक्षिणम् ।
बाहुं कृत्वा महादेवि हस्तौ संपरिवर्त्य च ॥ १३२ ॥
कनिष्ठानामिके देवि युक्ते तेन क्रमेण च ।
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ॥ १३३ ॥
अङ्गुष्ठौ तु महेशानि सरलावपि कारयेत् ।
इयं सा खेचरी नाम्ना मुद्रा सर्वोत्तमा मता ॥ १३४ ॥
परिवर्त्य करौ स्पृष्ट्वावर्द्धचन्द्राकृती प्रिये ।
तर्जन्याङ्गुष्ठयुगलं युगपत् कारयेत्ततः ॥ १३५ ॥
अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ।
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ॥
बीजमुद्रेयमचिरात् सर्वसम्पद्विवर्द्धिनी ॥ १३६ ॥
मध्यमे कुटिले कृत्वा तर्जन्युपरि संस्थिते ।
अनामिके मध्यगते तथैव हि कनिष्ठिके ॥ १३७ ॥
सर्वा एकत्र संयोज्या अङ्गुष्ठपरिपीड़िताः ।
एषा तु प्रथमा मुद्रा योनिमुद्रेयमीरिता ॥ १३८ ॥
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ।
अङ्गुष्ठ-मध्यमे भूयः संलग्ने सुप्रसारिते ॥
महामुद्रेति विख्याता परा मुक्तिकरी तथा ॥ १३९ ॥
एता मुद्रा महेशानि त्रिपुराया मयोदिताः ।

पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः ॥ १४० ॥
वामहस्तेन मुष्टिन्तु बद्ध्वा कर्णप्रदेशके ।
तर्जनीं सरलां कृत्वा भ्रामयेन्मनुवित्तमः ॥
सौभाग्यदण्डिनी मुद्रा न्यासकालेऽपि सूचिता ॥१४१॥
अन्तरङ्गुष्ठमुष्ट्या तु निरुध्य तर्जनीमिमाम् ।
रिपुजिह्वाग्रहा मुद्रा न्यासकाले तु सूचिता ॥ १४२ ॥
बद्ध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।
अङ्गुष्ठौ च तदग्रे तु मुद्रेयं भूतिनी मता ॥ १४३ ॥
वाममुष्टिं विधायाथ तर्जनी-मध्यमे ततः ।
प्रसार्य तर्जनीमुद्रा निर्दिष्टा वज्रपाणिना ॥ १४४ ॥
इतीदं कथितं भद्रे मुद्राणां लक्षणं स्फुटम् ।
पूजाकाले जपे स्नाने देवतासन्निधायकम् ॥
गोप्यं कुरु महादेवि न देयं कितवे शठे ॥ १४५ ॥

इति श्रीवामकेश्वरतन्त्रे उमामहेश्वरसंवादे
मुद्रानिघण्टुः समाप्तः

समाप्तोऽयं ग्रन्थः

# वर्णबीजकोषः



शब्दः — अर्थः

॥ अ ॥

अंशुः—उ
अंशुमान्—आ।ऐ
अंशुकम्—ह्सौम्
अकुलम्—हँ
अकूपारः—रूँ
अक्रूरः—ठ
अक्षतिः—ट।य।यँ
अक्षम्—ऊँ।त्रीँ
अक्षरात्मिका—:(अः)
अगः—द।रूँ
अगस्त्यः—औ
अगिरः—र।रँ
अगुणः—ॐ
अग्निः—इ।ऋ।प।ऐ।र।रँ।हं
अग्निकान्ता—स्वाहा
अग्निवधूः—स्वाहा
अग्निर्बीजम्—रं
अग्निवल्लभा—रं
अग्निशुद्धः—ई
अग्निसुन्दरी—ई
अघोरः—ओ।अं।हं
अङ्कुशः—झ।ट।क्रोँ
अङ्कुशजः—ऋ
अङ्कुशी—आ।त्र
अङ्कुशम्—ई।क्रों

अङ्गदः—औ
अङ्गिराः—ए।ऐ
अङ्गुलिः—ञ
अङ्गुलिमूलम्—घ
अङ्गुष्ठम्—आ
अचलः—द।व।रूँ
अचलकीला—ला।लँ
अचला—ई।ला।लँ
अच्छासिनी—न
अच्युतः—आ।उ।क्लीं
अजरः—आ।हं
अजगत्प्राणः—ट।य।यँ
अजरामरः—ग
अजः—ऐ।स।ॐ।द्राँ
अजागलः—ऌ
अजितः—आ।इ।उ।ग।क्लीं
अजेशः—ज।झ
अजेश्वरः—झ
अञ्जनम्—ङ।ज
अञ्जनी—ड
अटवी—ज
अट्टहासः—प।ग।स।ह।झ
अट्टहासिनी—न
अण्डजः—क।म।कँ
अतिथीशः—ऋ
अतिकालः—म

अत्रिः—द
अतीता—ख
अत्रिनेत्रजः—ऐ।ॐ।स।द्राँ
अतुला—ग
अत्रीशः—द
अत्ययः—घ्रुं
अदितिः—ला।लँ
अत्युग्रः—ख्रीं
अथर्वदेहजा—ऌ
अद्धा—ठ।न
अद्रिः—द।रूँ
अद्रीश्वरः—द
अद्रिसुता—ऋ
अधरः—ए।ऐ।ऐँ
अधरोष्ठः—ऐ
अधिघण्टिका—:(अः)
अधोक्षजः—आ।उ।क्लीं
अधिरूढा—इ
अधोदन्तः—ओ
अधोदन्तगः—औ
अध्यर्णम्—ए
अनङ्गः—इ।क।ख।ह।क्लीं।हँ
अनङ्गमदनातुरा—त
अनङ्गमालिनी—लँ
अनङ्गमेखला—च
अनङ्गवादिनी—यँ

| शब्दः | अर्थः |
|---|---|
| अनङ्गकृत् | आ |
| अनङ्गा | ज |
| अनङ्गाङ्कुशा | श |
| अनन्तम् | आ।क्षा।ख |
| अनन्तः | आ।ऋ।ऌ।औ।लँ।(अं)।:(अः)ह।क्ष। |
| अनन्तक्षयः | क्ष |
| अनन्ता | :।ल।लँ |
| अनन्तेशः | आ |
| अनन्यजः | इ।क।क्लीं |
| अनलमण्डलः | क्ष |
| अनलः | र।रँ |
| अनलवल्लभा | स्वाहा |
| अनुग्रहेशः | औ |
| अनादिकः | ए।त |
| अनामिका | ऋ |
| अनिरुद्धः | आ।:।वं |
| अनिलः | ट।ढ।य।यँ |
| अनुकम्पिनी | भ |
| अनुग्रहेश्वरः | औ |
| अनुच्चार्या | :(अः) |
| अनुत्तरः | अ |
| अनुत्तरवर्णकः | ॐ |
| अनुत्तराक्षरः(री) | अ |
| अनुनासिकः | ँ।ङ।ञ।न |
| अन्तम् | म |
| अन्तकः | क।ग।ण।म।ष |
| अन्तविता | न |
| अन्तस्थिता | ऋ |
| अन्तिकम् | क |
| अन्तिमस्वरः | :(अः) |
| अन्त्यः | क्ष |
| अन्त्यबाणः | सः |
| अन्धकारः | ङ |
| अन्धकारिणी | ओ |
| अन्तरिक्षम् | आ।क्ष।ख।ह।हँ |
| अन्तिमः | क्ष।ए |
| अन्धकरिपुः | प।ग।स।ह |
| अन्धतमः | औ |
| अन्धम् | व।वँ |
| अन्यः | न |
| अपपारिकः | र।रँ |
| अपराजिता | ल।वँ |
| अपर्णा | च |
| अपारः | ॐ |
| अपांनाथः | रूँ |
| अपांपतिः | रूँ |
| अप्पितम् | र।रँ |
| अबलम् | व।वँ |
| अब्जः | ऐ।ँ।स।द्राँ |
| अब्जयोनिः | क।म |
| अब्धिद्वीपा | ल।लँ |
| अब्धिबीजम् | रूँ |
| अब्धिमेखला | ल।लँ |
| अब्धिरूपा | इ |
| अब्धिशयनः | आ।उ।क्लीं |
| अभावः | ठ |
| अभ्रम् | आ।ख।व।ह।वँ।हँ |
| अभिख्या | प |
| अभ्रपुष्पम् | व।वँ |
| अमतिः | ऐ।ँ।स।द्राँ |
| अमरनायकः | उ |
| अमरः | क्ष |
| अमरेशः | इ।उ।ल।: |
| अमर्त्यकृत् | स |
| अमृतदीधितिः | ऐ।ँ।स।द्राँ |
| अमृतबीजम् | वं |
| अमृतम् | आ।ऌ।प।ओ।:।व।जूँ।वँ |
| अमृता | प।ऐ।: |
| अमृताकर्षिणी | (अं) |
| अमृताक्षः | स।वँ |
| अमृतादः | ट |
| अमृताधरा | :(अः) |
| अमृताधारशायिनी | ऐ |
| अमृतायः | ट |
| अमोघा | ठ।लँ |
| अम्बरम् | आ।ख।ह।आँ।हँ।हसौम् |
| अम्बा | ऋ।ऌ।(अं) |
| अम्बिका | ध |
| अम्बु | व।वं |
| अम्बुजन्मा | ऋ |
| अम्बुजम् | ठ |
| अम्बुदः | ऋ।वँ |
| अम्बुधिः | आ।थ |
| अम्बुभृत् | वं |
| अम्बुसूः | ऋ |
| अम्बुधा | व।वँ |

शब्दः — अर्थः

अम्भः—वा।वँ
अम्भोजम् · ठ
अम्भोधिः—रूँ
अम्भोनिधिः—रू
अम्भोराशिः—रूँ
अरणिः—रा।रँ
अरियुक्—लँ
अरिसूदनः—आ।उ।क्लीं
अरुः—न
अरुणः—उ।म।ह
अरुणा—ङ।ठ।त।हँ।ज्म्रीं।
म्ल्व्र्यूं
अर्कः—ऋ।ल।ॡ।म।ह।हं
अर्कबन्धुः—घ
अर्कमण्डलः—ञ
अर्घिः—उ
अर्घीशः—ऊ।ऌ
अर्णः—वा।वँ
अर्णवः—रूँ
अर्घगण्डी—ख
अर्थः—श
अर्धः—प।ङ
अर्धचन्द्रः—ट
अर्धनारीशः—ढ
अर्धनारीश्वरः—ढ
अर्घबन्धुकः—ओ
अर्धमात्रा—:।(अः)।प
अर्धमात्रिका—ॡ
अर्धेन्दुः—ं(अं)।:(अः)।ट
अर्घर्चः—ल।ॡ

शब्दः — अर्थः

अर्बुदः—ऋ
अर्यमा—आ।म
अर्हः—इ।ल
अलकनन्दा—ऌ
अवनिः—ल।लँ
अवनी—ल
अवनीधरः—द।रूँ
अवलम्बिनी—च
अवहारिता—लं
अवमः—भ्रा।ञ।वँ।हं
अव्यक्तः—न।ॐ
अश्वः—:(अः)
अश्वरः—न
अश्मकः—नमः
अश्मरी—नमः
अश्मरीशः—ओ
अश्विनी—स
अश्वी—अ
अष्टकः—ऋ।प।ट
अष्टकर्णः—क।म।कँ
अष्टमी—ऋ
अष्टमूर्तिः—प।ग।स।ह
अष्टसिद्धिभूः—ॐ
अष्टाक्षरः—ॐ
अष्टाशब्दः—ॐ
असिता—ल।लँ
असिताङ्गः—इ।ग
असिभीषणा—ओ
असिः—भ्र
असितः—ल।भ्र

शब्दः — अर्थः

असुरा—:(अः)
अस्त्रम्—फट्
अस्थिधातुः—श
अस्थिमाली—प।ग।स।ह
अहम्—हं
अस्थिसंज्ञः—श
अहर्पतिः—म
अहङ्कारः—फ, ङ
अहङ्काराकर्षिणी—इ
अहस्करः—म।घ
अहार्यः—द।रूँ
अहिद्विट्—इ।ल

॥ आ ॥

आः—क।म।कँ
आकर्षणम्—वषट्
आकल्पितः—भ्र
आकारः—अ
आकाशम्—आ।ख।ग।हँ
आकाशः—आ।ख।ह
आकाशतरः—ङ
आकांक्षा—आ।ॐ।भ्र
आकूतबीजम्—रमरलमर
क्षड्हसई
आकृतिः—भ्र
आखण्डलः—इ।ल
आखुगः—गँ
आगममालिनी—ण
आग्नेयः—य।र
आज्ञाचक्रेश्वरः—क्ष
आज्यपा—क्ष

शब्दः — अर्थः

आत्मकम्—प
आत्मज्ञाना—ऐ
आत्मज्ञः—झ
आत्मबीजम्—अ
आत्ममुखी—ट
आत्मशक्तिः—च।छ।ज
आत्मभूः—इ।क।कँ
आत्मा—अ।आ।ऊ।(अं)।हं ह्सौः
आत्माकर्षिणी—ए।औ
आत्मानामिकः—ङ
आत्मान्तकेश्वरः—ॠ
आत्मिकभूः—ओ
आत्मिका—ॠ
आदरसूः—ऊ
आदरः—:(अः)
आदिः—ॐ।क
आदित्यः—ॠ।ङ
आदित्यवर्णा—ठ
आदिदेवः—आ।ऊ।क्लीं
आदिबिन्दुः—ङ
आदिभूता—ठ
आदिशक्तिभूः—:(अः)
आदिस्वरः—अ
आदिमः—ध
आदिमा—ल।लँ
आद्यः—अ
आद्या—ज।ट।ल।लँ
आद्याबीजम्—क्रीं
आधारधामभूः—ध

शब्दः — अर्थः

आधारशक्तिः—ए
आनन्दम्—ड।हं
आनन्दः—उ
आनन्दा—ॠ।ठ
आनन्दाकर्षकः—ओ
आन्तः—इ
आन्वीक्षिकी—ज
आपः—व।वँ
आपसन्धिः—ऊ
आपूर्णम्—ॠ
आप्तः—अ
आप्ततमः—आ
आप्यायनी—ओ
आमुक्तिः—थ
आमोदा—झ
आम्नातकेश्वरः—ऌ
आयुधं—फट्
आलापिनी—च
आलयः—क्ष
आवकः—ट।य।यँ
आशयाशः—र।रँ
आशुगः—ट।ढ।ण।य।यँ
आशुशुक्षणिः—र।रँ
आश्रयाशः—र।रँ
आषाढी—त
आषाढीशः—ण
आसिका—ऐ
आसुरः—म
आस्यराट्—आ
आरुङ्जिन—ब्रौं

शब्दः — अर्थः

आह्लादिनी—द

॥ इ ॥

इक्षुः—ष
इच्छा—झ
इड़ा—ल।लँ
इडिका—ल।लँ
इन्दिरा—इ।ळ।श्रीं
इन्दुः—ऐ।ॐ।सा।द्राँ
इन्द्रः—इ।ल
इन्द्रचापः—ऊ
इन्द्रजनकः—क्लीं।रूँ
इन्द्रधनुः—झ
इन्द्रधाम—ऊ
इन्द्रबीजम्—इ।लँ
इन्द्रसूः—इ
इन्द्राक्षी—प
इन्द्राणी—इ।ऐ।चाप
इन्द्रादिः—ॐ
इन्द्रावरजः—आ।उ।क्लीं
इन्द्रियम्—ख
इन्धिका—उ
इरः—य
इरा—य।ल।व।लँ।वँ
इरेशः—आ।उ।क्लीं
इला—ल।लँ
इलिका—ल।लँ
इषु—:(अः)

॥ ई ॥

ईकारः—श्रीं
ईरः—य

शब्दः — अर्थः

ईश—लॢँ
ईशः—ए[illegible]ऌ।ं(अं)।ग।न सा।सौ।ह।हं
ईशनेत्रम्—क्ष
ईशानः—ं(अं)।ए।ग।स।ह।हँ
ईशानपतिः—ङ
ईशानवीजम्—हं
ईशानवल्लभा—ह्रीं
ईशानी—ई
ईश्वरः—आ।ई।ऊ।ए।ओ।ग न।प।म।स।ह
ईश्वरी—ढ।र।ह्रीं
ईहा—ॐ

॥ उ ॥

उः—ए।ग।स।ह
उग्रः—ड।ए।ं(अं)।ग।ढ।स ह।हूं
उग्रकालः—म
उग्रगन्धिकः—ग्लौं
उग्रदर्पः—हूं
उग्रबन्धनम्—म
उग्रभैरवी—ऐ।ऐं
उग्रशूलधृक्—ध
उग्रशेखरा—ऌ
उग्रहासिनी—ऌ
उग्रा—आ।क्ष्रा।क।ख।भ।रं
उग्रायुधः—ख
उच्चसंहर्ता—न
उच्चाटनम्—ज
उच्छूनकम्—फ्रौं वर्ण—ख

शब्दः — अर्थः

उज्जयिनी—थ
उज्जयिनीपतिः—थ
उडु—त्राँ
उडुपः—ए।द्राँ
उड्डीशेशः—प
उत्कारी—व
उत्तमः—ज।ट
उत्तरभैरवः—ऐ
उदकम्—व।वँ
उदजः—आ
उदरम्—म
उदर्चिः—र।रँ
उदारकेशः—ड
उदितात्मा—ङ
उद्गारिणी—व
उद्गारी—व
उद्दाली—ञ
उद्देश्यः—ओ
उद्भिज्जरूपिणी—ओ
उद्यानपदेश्वरी—ल
उन्नतिः—त
उन्मत्तः—ऐ।स
उन्मत्तभैरवः—ऌ।ङ।ॐ
उन्मत्तभैरवी—ऐ
उन्मत्तोन्मत्तकः—इ।क।क्रीं
उन्मादनम्—स
उन्मादिकः—ध
उन्मादिनी—ई।ॡ।छ
उपधात्मिका—औ
उपध्वनिः—ङ

शब्दः — अर्थः

उपलम्—क्रूं
उपलः—क्रुं
उपशान्तिकृत्—ॡ
उपस्थः—म
उपस्थाना—च
उपहारकः—प
उपान्त्यः—ल
उपान्त्यगः—लु
उपेन्द्रः—आ।उ।क्लीं
उभयदः—ॐ
उमा—इ।उ।ः(अः)ख।द।फ
उमाकान्तः—ए।ग।ण।स।ह
उमापतिः—द।ग।स।ह
उमेशः—आ
उरगः—द
उरोजः—ज।जँ
उरोरुहः—ज
उर्वरा—ल।लँ
उर्वशी—श्रा
उर्वी—ल।लँ
उल्कामुखी—औ
उशनाः—ग्रौं
उषर्बुधः—र।रँ
उषर्बुधप्रिया—स्वाहा
उषा—ग
उष्मा—र
उष्मादः—ऊ
उष्णरश्मिः—औ।म
उष्मवर्णः—र
उष्माणः—श।ष।स।ह

शब्दः अर्थः

उष्माहृद्यः—र

॥ ऊ ॥

ऊकारान्तः—ऋ

ऊरुद्वयात्मकः—त

ऊरुमूलम्—त

ऊर्जम्—वाव

ऊर्ध्वम्—एाएं

ऊर्ध्वकेशिनी—उाऊागाफ

ऊर्ध्वकेशी—ए

ऊर्ध्वगः—ए

ऊर्ध्वदन्तः—एाओ

ऊर्ध्वदेवः—आाउाक्लीं

ऊर्ध्ववीजम्—ऐ

ऊर्ध्वमातृका—औंः

ऊर्ध्वमुखा—त

ऊर्ध्वमुखी—ऋाऔात

ऊर्ध्वमुखम्—'(अं)

ऊर्ध्वमूर्त्तिः—ऋ

ऊर्ध्वरेताः—एागासाह

ऊर्ध्ववापी—न

ऊर्ध्वेन्दुः—ँ

ऊर्ध्वोष्ठः—एाओ

ऊर्मिः—वावँाप्लूं

ऊर्मिमाली—रूँ

ऊर्मी—व

॥ ऋ ॥

ऋक्प्रदा—ञ

ऋक्यः—अ

ऋक्षम्—त्राँ

ऋच्छम्—त्रों

शब्दः अर्थः

ऋतम्—वावँ

ऋतधामा—क्लीं

ऋद्धिः—उाऋालाकाखाढाल

ऋद्धिदा—ए

ऋद्धिराट्—ऋ

ऋपुः—ऋ

ऋभुक्षाः—इाल

ऋषिकुल्या—ऌ

ऋषिसूदनः—ऋ

ऋषीश्वरः—ऊ

ऋष्या—ऋ

॥ ए ॥

एकः—ओाॐ

एककर्त्तरी—ग

एककृत्—भ

एकदन्तः—ऋालागँ

एकदन्ता—ऋ

एकद्रूष्टकः—ए

एकनेत्रम्—ङ

एकनेत्रः—छागँ

एकनेत्रान्तः—ज

एकनेत्रेश्वरः—छ

एकपात्—ऋापाङ

एकपादः—ऋाछाञाठाङ

एकबुद्बुदः—'(अं)

एकमात्रः—अ

एकमात्रा—ऊ

एकरुद्रः—औाङ

एकरूपः—च

एकवामः—छ

शब्दः अर्थः

एकश्रृङ्गः—आाउाक्लीं

एका—ज

एकाङ्घ्रिः—ल

एकादशी—ए

एकाम्रः—ॡ

एकाम्रपीठिका—ॡ

एणतिलकः—ऐाँासाद्राँ

एणाङ्कः—ऐाँासाद्राँ

एलापुरनिवासिनी—ढ

एलापुरः—ढ

॥ ऐ ॥

ऐन्दवम्—ऊ

ऐन्दवी—ई

ऐन्द्रम्—ईार

ऐरावतः—ऐ

ऐश्वरी—उाढ

ऐश्वर्यम्—ऐ

॥ ओ ॥

ओङ्कारपीठगः—ख

ओषधीशः—ऐाँासाद्राँ

ओष्ठः—एाओ

ओष्ठनामा—ओ

॥ औ ॥

औदार्यम्—औ

औरसः—औ

औषधात्मिका—औ

॥ क ॥

कम्—जावावँ

कंसारातिः—आाउाक्लीं

| शब्दः | अर्थः |
|---|---|
| कंसारिः—आ।उ।क्लीं | |
| कः—ए | |
| ककुत्—ल।व | |
| ककुद्गतः—ल।त्र | |
| ककुद्ध्वजः—ल | |
| ककूत्तिः—क | |
| कङ्कणम्—ग।झ।व | |
| कङ्कली—ए।ग।स।ह | |
| कचङ्गलः—रूँ | |
| कचम्—ज | |
| कचबीजम्—ऊ | |
| कचसूः—अ | |
| कच्छपः - च।फ | |
| कच्छेष्टः—च | |
| कज्जजः—का।म।कँ | |
| कटकी—क्राँ | |
| कटप्रूः—ए।ग।स।ह | |
| कटिः—ट।त | |
| कटी—क्राँ | |
| कटुः—इ | |
| कटुकपत्रा—लृ | |
| कठिनपृष्ठगः—च | |
| कण्ठः—ः(अः) | |
| कण्ठकः—उ।ः(अः) | |
| कण्ठेकालः—ए।ग।स।ह | |
| कण्ठोष्ठम्—ओ।औ | |
| कद्रा—घ | |
| कन्दः—ल | |
| कन्दर्पः—इ।क।क्लीं | |
| कन्दर्पास्त्रम्—ऍं | |

| शब्दः | अर्थः |
|---|---|
| कन्धिः—रूँ | |
| कन्या—ं(अं) | |
| कन्यास्तनः—ः(अः) | |
| कन्यास्तननिभः—ः(अः) | |
| कपन्धम्—व।वँ | |
| कपर्दिनी—ऋ।व।भ | |
| कपर्दी—ए।ऐ।ओ।ग।प।स।ह | |
| कपालः—लृ | |
| कपालिनी—ऊ।ः(अः)।क।ङ | |
| कपाली—ए।क।ख।घ।ट।ठ | |
| कपिलः—र।ह।रँ | |
| कपिललोचना - ट | |
| कपिला—ट।य | |
| कपिलामलः—ह्र | |
| कपिली—ट | |
| कपीश्वरः—ख | |
| कफोणिः—ख | |
| कबन्धः—व।वँ | |
| कमठः—च।फ | |
| कमण्डलुः—ठ | |
| कमनुः—ख | |
| कमलम्—व।वँ | |
| कमला—इ।उ।ऌ।क।ख।श्रीं | |
| कमलाक्षी—स्त्रीं | |
| कमलाप्रिया—उ | |
| कमलावती—च | |
| कमलावेशः—उ | |
| कमलासनः—का।म।कँ | |
| कमलोद्भवः—का।म।कँ | |
| कम्बलम्—व।वँ | |

| शब्दः | अर्थः |
|---|---|
| करः—ं(अं)।क | |
| करकम्—क्रुं | |
| करका—क्रूं | |
| करटी—क्राँ | |
| करणः—उ।औ | |
| करतलः—ठ | |
| करभी—क्राँ | |
| करमूलं—व | |
| करादिगः—क | |
| करालः—आ।घ | |
| कराला—औ | |
| करालिनी—आ।इ।ऌ।ं(अं) | |
| कराली—ग | |
| करिणी—ठ | |
| करी—क्राँ | |
| करुणः—व | |
| करुणा—ख।ज।ह्रीं | |
| करुणाकरा—उ | |
| करेणुः—क्राँ | |
| कर्कटः—फ | |
| कर्कशात्मा—त्र | |
| कर्णः—उ।ऋ | |
| कर्णदक्षः—उ | |
| कर्णबिन्दुः—उ | |
| कर्णिकी—क्राँ | |
| कर्पूरान्तः—ग | |
| कर्तृकाधरा—ज | |
| कर्बुरम्—व।वँ | |
| कर्बुरा—क | |
| कर्मजम्—छ | |

शब्दः — अर्थः

कर्मप्रिया—सौ
कर्मसाक्षी—ळ
कर्षिणी—आ।ळ।ओ।अं
कलम्—क
कलकण्टः—स
कलकण्ठा—ष
कलत्रम्—छ।द
कलभा—स
कलशः—म।व
कलशध्वनिः—व
कलहप्रिया—ज
कलहंसप्रिया—झ
कला—ई।ः(अः)।क।ॐ।ह्रीं
कलात्मा—ठ
कलाद्यं—क्रौं
कलानिधिः—ऐ।ॐ।स।द्राँ
कलापूर्णा—अः
कलामयी—ई
कलावती—ऋ।क।च
कलावाणी—ॐ
कलावान्—ऐ।ॐ।स।द्राँ
कलाशक्तिः—क
कलिका—ह
कलोत्तरीयः—ई
कल्पः—ध्रुं
कल्पना—ए
कल्पलता—ऋ
कल्पान्तः—ऋ।छ।ध्रुं
कल्मषम्—ऋ
कल्मषा—ळं

कल्याणम्—श
कल्याणी—क।ख
कवचम्—हुं
कवलकम्—क
कविः—ल।ह।व्रौं
कविबीजम्—व्रौं
कवोरुकः—ह
कव्यवहा—क्ष
काकिनी—ओ
काकिनीबीजम्—क
काकोदरः—द
काकोदरी—ण।त
काङ्क्षा—झ
काण्डम्—घ
कात्यायनी—द
कान्तः—इ।उ।ल।ऐ।ॐ।क।ख।ग।स।क्लीं।द्राँ
कान्ता—ः(अः)।ग।स्त्रीं
कान्तिः—आ।उ।ल।ळ।ङ।फ।श।ष।ह।हँ
कान्तिगुह्या—ङ
कान्तिदा—घ
कान्तिमान्—इ।ई।क।क्लीं
कान्यकुब्जकः—ऊ
कान्यकुब्जभूः—ऊ
कापीशम्—ऊँ।व्रीं
कामः—आ।इ।ं(अं)।क।छ।ड।क्ष।क्लीं
कामकूटम्—ऐ।ह्स्रौं
कामगः—इ।क।क्लीं

कामगुह्यकः—ः(अः)
कामगोलकः—उ
कामघ्नः—उ
कामचारः—इ।ऊ।क।क्लीं
कामचारविहारिणी—छ
कामदः—आ।इ।क।क्लीं
कामदा—क।छ
कामधुक्—प
कामधूसकः—प
कामधेनुः—क।क्लीं
कामध्वजा—ळ
कामनाशः—उ
कामप्रिया—ङ
कामबीजम्—क।क्लीं।क्लीं।ह्स्क्ल्रीं
कामभर्ता—छ
काममाता—छ
कामराजः—आ।क्लीं
कामरूपम्—ऐ
कामरूपः—आ।ए।क।श
कामरूपा—क।श
कामरूपिणी—क
कामरूपी—ख।घ।श
कामवर्धनः—इ।ल।क।क्लीं
कामवाणः-द्रां।द्रीं।क्लीं।ब्लुं।सः
कामा—क्ष
कामाकर्षिणी—अ
कामाख्यः—घ
कामाख्या—घ
कामास्त्रम्—ह्रीं

| शब्दः | अर्थः |
|---|---|
| कामिकः | त |
| कामी | इ।ऋ।का।त।क्लीं |
| कामुकः | इ।का।क्लीं |
| कामिका | का।त |
| कामिनी | आ।इ।का।ख।ग।स्त्रीं |
| कामिनीसध्यकर्णकः | त |
| कामिनीमध्यवर्तकः | त |
| कामेशी | आ।इ।आं।क्लीं क्ल्ह्रीं |
| कामेश्वरी | आ।ख।ङ क्ल्ह्रीम् |
| कामेश्वरीवाणः | यांरां लांवांशां |
| कामेश्वरपीठोपसेचनः | ण |
| कामोदः | ज |
| कामोदरी | त |
| काम्पिनी | क्लीं |
| काम्या | घ |
| कायः | क्ष |
| कायिनी | झ |
| कारखाग्निः | ख |
| कार्त्तवीर्यार्जुनः | फ्रों |
| कार्त्तिकेयः | ङ |
| कार्मुकम् | ऋ |
| कार्शिकः | ऋ |
| कार्षिकः | ऋ |
| कालम् | हँ |
| कालः | ऌ।ः।ॐ।ख।छ।झ।म।प।क्ष।हं |
| कालकर्षिणी | ऐ |
| कालकल्पा | च |
| कालकारिका | ई |
| कालकूटा | उ।ओ |
| कालकृष्णः | प |
| कालजिह्वा | आ।ल।क्ष |
| कालञ्जरः | ए।ग।स।ह |
| कालनिशा | आ |
| कालनेमिरिपुः | आ।उ।क्लीं |
| कालपूर्णा | अः |
| कालपोता | ञ |
| कालबीजम् | ञ |
| कालभद्रः | म |
| कालभैरवी | आ |
| कालरात्रिः | आ।ऌ।ऐ।औ का।छ।प।फ।र।ह।म् |
| कालरात्र्यग्रा | आ |
| कालरूपः | घ |
| कालरूपा | ग |
| कालरूपी | ख |
| कालवक्त्रा | उ |
| कालसंकर्षा | ख |
| काला | :(अः) |
| कालसुन्दरी | ं(अं) |
| कालाग्निः | क.ह्रौं |
| कालादिः | भ |
| कालानलः | हूं |
| कालिका | ऋ।त।क्रीं |
| कालान्तकः | उ |
| काली | आ।क।ख।ङ।क्रीं |
| कालेशः | म |
| काव्यम् | भ्रों |
| काव्यः | लँ।वौँ |
| काशिका | आ |
| काश्यपी | ल।लँ |
| काशिनाथः | ए।ग।स।ह |
| काष्ठा | ट |
| काष्ठारूपा | घ |
| किल्विषम् | ऋ |
| किङ्करः | झ |
| किङ्करी | ऊ |
| किङ्करीबीजम् | ऋ।दीं |
| किङ्किणी | ऋ।घ।ह्रीं |
| किञ्जल्कः | झ |
| किन्नरः | नमः |
| किन्नरी | ज |
| कीनाशः | ञ |
| कीर्त्तिः | आ।ई।ऋ।ए।घ |
| कीलालम् | वा।वँ |
| कुः | ठ।ल।लँ |
| कुक्कुटी | ङ |
| कुक्षम् | क्ष |
| कुक्षिः | झ।प |
| कुचः | ज |
| कुचमण्डलम् | झ |
| कुटिलरूपः | द |
| कुज्ञानी | ञ |
| कुञ्जरः | क्राँ।पां |
| कुञ्जा | फ |
| कुटिलः | उ।ल |
| कुटिला | ट।द |

| शब्दः | अर्थः |
|---|---|
| कुटिलारूपः | द |
| कुटिलाश्रोत्रं | उ |
| कुट्टारः | द।रूँ |
| कुण्डलम् | :(अः)।ठ।स |
| कुण्डलद्वयम् | : |
| कुण्डलसवत्रम् | : |
| कुण्डली | ग।स।ह्रीं |
| कुण्डलीशः | ॐ |
| कुण्डिका | क |
| कुण्डोदरी | ऌ |
| कुत्सनः | क |
| कुत्सितावेषः | क |
| कुन्ती | क्रौं।क्रीं |
| कुबेरः | द |
| कुबेरद्रुरू | ल।ऌ |
| कुबेरबीजम् | सं |
| कुब्जः | ं(अं) |
| कुब्जा | ं(अं) |
| कुब्जाभा | छ |
| कुब्जिनी | न |
| कुमारः | ङ।श |
| कुमारसूः | ल |
| कुमुदः | ट |
| कुमुदिनीपतिः | ऐ।द्राँ |
| कुमुदेशः | ण।ॐ।स।द्राँ |
| कुमोदकः | अ।उ।क्रीं |
| कुम्भः | ल।प |
| कुम्भतृतीयकः | य |
| कुम्भी | क्रौं |
| कुरङ्गाक्षी | आ।स्त्रीं |
| कुरुकुल्ला | आ।ऐ |
| कुलम् | ए।श।स।ह।हं |
| कुलकौलिनी | श |
| कुलनायकः | ग्र |
| कुलमार्गस्थितः | ख |
| कुलमालिनी | क |
| कुलशालिनी | ट |
| कुलसुन्दरी | ल।घ |
| कुलाचलः | ए |
| कुलीरः | फ |
| कुलोद्भवा | ए |
| कुलान्तकनिवासिनी | ग।द |
| कुलान्तर्क्षम् | ङ |
| कुलान्तालयवासिनी | ङ |
| कुलेश्वरः | ए।ग।स।ह |
| कुल्ला | इ।ख |
| कुल्लुका | ं(अं) |
| कुशानु | च।वं |
| कुसुमम् | क |
| कुसुमायुधः | श।क्लीं |
| कुसुमी | ऌ |
| कुसुमेषुः | इ।क।क्लीं |
| कुहूः | ऊ।क्ष |
| कूजिनी | व |
| कूटम् | श।क्रौं |
| कूटः | ह |
| कूटत्रयम् | ऐं।क्लीं।ह्रीं |
| कूटपाणिः | ट |
| कूर्चम् | हूं |
| कूर्दिनी | ब |
| कूर्परः | ख।छ |
| कूर्मः | च।फ |
| कूर्मेश्वरः | च |
| कूलङ्कषः | रूँ |
| कूष्माण्डी | औ |
| कृत् | घ।ज |
| कृतरूपिणी | ह्रीं |
| कृतान्तः | त्र |
| कृतान्तकः | ं(अं) |
| कृतान्तकृत् | ठ |
| कृतिः | ं(अं) |
| कृती | ऌ |
| कृतीशः | ऌ |
| कृत्तिवासाः | ए।ग।स।ह |
| कृपा | श्र।ऐं |
| कृपाद्रैतः | क |
| कृपीटम् | च।वं |
| कृपीटयोनिः | र।रँ |
| कृशा | ह्रीं |
| कृशाङ्गिनी | ऐ |
| कृशानुः | ण।र।रँ |
| कृशानुरेताः | ए।ग।स।ह |
| कृषा | ए |
| कृष्णः | आ।उ।थ।द।र।क्लीं |
| कृष्णगतिः | र |
| कृष्णबीजम् | क्लीम् |
| कृष्णवर्त्मा | र।रँ |
| कृष्णा | थ।र।क्री |
| कृष्णार्चिः | र।रँ |

शब्दः — अर्थः

केकराक्षी—झ
केतुः—हुं।ल
केदारः—ं(अं)
केदारपीठः—ं(अं)
केनः—फ
केलिनी—ं(अं)
केलिवल्लभः—औ
केवलः—ं(अं)
केशः -ड।थ।प
केशरी—ठ
केशवः—आ।उ।क्रीं
केशी—आ।उ।क्रीं
कैटभजित्—आ।उ।क्रीं
कैटभारिः—ख
कैरवी—क
कैलासः—ओ
कैलासनिकेतनः--ए।ग।स।ह
कैलासेशः—ओ
कोकः—ऋ
कोटरः—इ।ई
कोटरा—क
कोटराक्षी—ए।ऐ
कोटरी—इ।ण
कोटरीश्रोत्रम्—ण
कोपः—क्ष
कोपतत्त्वम्—क्ष
कोपनिवारणः—ह
कोमलम्—ऋ।व।वँ
कोलवक्त्रा—उ
कोलगिरिः—उ

शब्दः — अर्थः

कोलगिरिपीठनिवासिनी—उ
कोशः—ष
कोष्ठपीशः—ऐ
कौमारी —उ।ऐ।ओ।ग्र।च।ञ।ड
कौमुदी—आ
कौमुदीपतिः--ऐ।ॐ।स।द्राँ
कौलिनी—औ।ं(अं)।क।श।क्ष्म्रीं
कौशिकी—आ
क्रतुध्वंसी – ए।ग।स।ह
क्रिया—ऋ।ल
कूटकूपरिरावणः—ह
क्रुद्धः—भ
क्रूरः—ः(अः)
क्रूरतरः—ं(अं)
क्रूरेशः—ं(अं)
क्रोङ्कारः—क्रों
क्रोड़कान्ता—ल।लँ
क्रोडपुच्छः—ढ।त
क्रोड़ाङ्गः—च
क्रोधः—ऋ।ः।क्ष।क्रूं।हुं।ह्रूं
क्रोधनः—ऊ।क
क्रोधनायकः—क
क्रोधसंहारः—क्ष
क्रोधिनी—र
क्रोधीशः—क
क्लिन्ना—उ।भ
क्लीवत्ववक्त्रम्—ङ

शब्दः — अर्थः

क्लेदिनी—ल।य।क्रों
क्लेदुः—ऐ।ॐ।स।द्राँ
क्लेशितः—म
क्वाणः—भ्रौं
क्षणदा—त
क्षतजः—व
क्षतजोक्षितः—र
क्षत्रिणी—छ
क्षपा—त
क्षपाकरः—ऐ।ॐ।स।द्राँ
क्षमा—उ।ट।ठ।ध।न।ल।लँ
क्षमावती—क्ष
क्षरम्—व।वँ
क्षरः—ऐ।फ
क्षयः—ल।क्ष।ध्रुं
क्षया—ठ
क्षान्तिः—उ।ड
क्षान्तिदम्—ध्रुं
क्षामकम्—ध्रुं
क्षामखण्डा—ं(अं)
क्षामा—ह्रीं
क्षायिनी—ङ
क्षारम्—न
क्षारोदधिः—अ
क्षितिः—ज।ल।लँ
क्षितिभृत्—द।रूँ
क्षीरम्—व।वँ
क्षीरसमुद्रजा—श्रीं
क्षीराब्धिः—रूँ
क्षीरिकापीठः—ध

शब्दः — अर्थः

क्षीरोदनन्दनः—ऐ।ॐ।सा।द्राँ
क्षीरोदसम्भवा—श्रीं
क्षुधा—च
क्षुरकः—घ्रुं
क्षेत्रपः—क्ष
क्षेत्रपालः—क्ष
क्षेत्रपालबीजम्—क्षं
क्षेत्ररूपिणी—क्ष
क्षोभणम्—द्राँ
क्षोभिणी—म
क्षौरम्—घ्रुं
क्षोणिः—ल।लँ
क्षौणिः—ल।लँ
क्षौणिप्राचीरम्—रूँ
क्ष्मा—ल।क्ष।लँ
क्ष्मात्मकः—ऐ
क्ष्माभृत्—द।रूँ

॥ ख ॥

खम्—ळ।ह।हँ
खगः—आ।आं।ळ।ख।ह
खगवती—ल।लँ
खगा—ट
खचमसः—ऐ।ॐ।सा।द्राँ
खञ्जनः—फ
खड्गकः—ख
खड्गबीजम्—खं
खड्गिनी—ख
खड्गी(ण्डी)—घ।ल।व
खड्गीशः—घ।व

शब्दः — अर्थः

खण्डनम्—ल
खण्डनी—ल।लँ
खण्डपरशुः—प।ग।स।ह
खण्डपर्शुः—प।ग।स।ह
खद्योतः—हं।हां
खनदा—ट
खप्रबन्धकः—ं(अं)
खरः—प
खरुः—प।ग।स।ह
खर्वः—ङ
खलः—श
खश्वासः—ट।य।यँ
खसंस्थितः—क्ष
खसपर्णः—का।म।कँ
खान्तः—क।ग
खापगा—ल
खेचरः—ट
खेचरी—आ।ङ।ऊ।ऋ।च।ट।ठ
खेचरीध्वनिः—ढ
खेचरीबीजम्—ह्स्ख्फ्रें
खेजरः—प।ग।स।ह
खेटमुखी—ट
खेरकः—प
खेलकः—इ।क।क्लीं
ख्यातबीजम्—ख्यूं

॥ ग ॥

गगनम्—ङ।ं(अं)।ख।भ।व।ह।हँ
गगनपतिः—त्र
गगनरत्नम्—ग्लूं

शब्दः — अर्थः

गगनाम्बरधारिणी—ण
गङ्गा—ल।ग
गङ्गाधरः—प।ग।स।ह।रूँ
गङ्गाबीजम्—ळ
गजः—आ।क्राँ।प्राँ
गजकुम्भः—ग
गजगामिनी—ऋ
गजमुखः—गँ
गजवक्त्रकः—ए
गजसाधनम्—क्रों
गजाङ्कुशः—ङ।ट
गजास्यः—गँ
गजाननः—ळ।गँ
गजेन्द्रः—क।ख
गजेश्वरी—भ
गडवः—ळ
गण्डः—ळ
गण्डनामा—ळ
गणनाथः—ः(अः)।क
गणनायकः—ऋ।क
गणपतिबीजम्—गँ
गणपालकः—ल
गणराट्—ख
गणाधिपः—ळ।ढ़।गँ
गणाध्यक्षः—ग
गणाम्बा—ए
गणेशः—ः(अः)।ग।क्ष।गँ
गणिकाबीजम्—ख्रीम्
गणेश्वरः—ग।क्ष
गणेश्वरी—ऐ

शब्दः — अर्थः

गतः—चाल
गतिः—जार
गदाग्रजः—आ।उ।क्लीं
गदाधरः—आ।उ।क्लीं
गदाभृत्—आ।उ।क्लीं
गदिनी—ङ
गदी—ख
गदीशः—ख
गन्धः—ट।त।श
गन्धर्वः—इ
गन्धवती—ल।लँ
गन्धव(वा)हः—ट।य।यँ
गन्धाकर्षिणी—ॠ
गन्धिनी—न
गभस्तिमान्—म
गरुड़ः—ख।क्षिं
गरुड़ध्वजः—आ।उ।क्लीं
गर्गः—भ
गर्जनम्—ह
गर्जितम्—ट
गर्जिनी—इ।प
गर्भ(र्व)विमोचनः—स
गर्भशक्तिः—:(अः)
गलत्—च
गलः—स
गाथा—ग।ल
गाथागन्धर्वगः—ग
गान्दिनी—लृ
गायकः—र
गायत्री—ओं।ग।भ।ॐ
वर्ण—ग

शब्दः — अर्थः

गायत्रीवीजपञ्चांशः—ॐ
गायनः—इ।का।ञ।ल।क्लीं
गारुड़ी—ऋ
गिरिः—ड।ट।द।व।रूँ
गिरिकर्णिका—ल।लँ
गिरिजः—ञ
गिरिजा—व
गिरिदर्शनः—ग
गिरिनायकः—न
गिरिवरः—व
गिरि(री)शः—ए।ग।स।ह
गिरिसुता—ह्रीं
गिरीश्वरः—ल
गिरीश्वरी—र
गीः—ग
गीतम्—ग
गीतिजः—इ।क।क्लीं
गीर्वाणः—क्ष
गुड़ाकेशः-आ।उ।ए।ग।स।ह।क्लीं
गुणजीवकः—ॐ
गुणवीजकः—ॐ
गुणभूतेज्यः—ॐ
गुणसागरः—क।कँ
गुणाद्या—ॐ
गुप्तकालीवीजम्—क्रीं
गुरुः—आ।ख।ग।ढ
गुरुपादुकामन्त्रः—ऐं।ह्रीं
श्रींह्स्ख्फ्रें ह्स्क्ष्
म्ल्व्र्यूं स्ह्क्ष्म्
ल्व्र्यीं ह्सौः

शब्दः — अर्थः

गुरुवीजम्—ह्स्ख्म्ल्व्
र्य्ऊं
गुरुभावः—ठ
गुरुशक्तिवीजम्—स्ह्ख्
म्ल्व्र्य्ऊं
गुल्फा—द
गुहः—भ
गुहा—ह्रीं
गुहाकृतिः—ॡ
गुह्यः—च।थ
गुह्यकर्णः—प
गुह्यकर्त्ता—प
गुह्यनिद्रा—ऊ
गुह्यवार्ता—प
गूढाङ्गः—च
गृध्नुः—आ।उ।क्लीं
गृध्रः—लृ
गृध्रखः—लृ
गोकर्णः—छ
गोकर्णेशः—छ
गोकुलेश्वरः—ग
गोचरः—ग
गोणी—ग
गोत्रभित्—ल
गोत्रा—ध
गोधनः—छ
गोधरा—ग
गोपालबीजम्—क्लीं
गोपिनी—ग
गोपेन्द्रः—आ।उ।क्लीं

| शब्दः | अर्थः |
|---|---|
| गोबिन्दः | ई |
| गोबीजम् | ग |
| गोभूः | ग |
| गोमुखः | ग |
| गोमुखी | ऋ |
| गोमुख्या | ऋ |
| गोवर्धनधरः | आ।उ।क्लीं |
| गौः | ऌ।ग।ञ।ल।स।लँ |
| गौतमः | घ |
| गौरः | घ |
| गौरवम् | ऌ |
| गौरी | इ।ग।घ |
| ग्रन्थिः | थ |
| ग्रसिनी | क |
| ग्रहः | थ |
| ग्रहपतिः | म |
| ग्रहाधीशः | भ्र |
| ग्रामणीः | प।व |
| ग्रावा | द |
| ग्रासः | क्ष |
| ग्रासिनी | हं |
| ग्राहः | थ |
| ग्राहकः | थ।ॡः |
| ग्लौः | ऐ।ॐ।स।द्रां |

॥ घ ॥

| शब्दः | अर्थः |
|---|---|
| घटाटिः | ञ |
| घटिकात्मिका | छ |
| घटोदरः | ग |
| घण्टाटः | घ |
| घण्टाधारिणी | घ |
| घण्टाबीजम् | घ्रीम् |
| घण्टि | घ |
| घण्टिकः | :(अः) |
| घण्टिका | ऋा'(अं)।घ |
| घण्टी | भ |
| घण्टेशः | घ |
| घनम् | व।वँ |
| घनः | घ।व।भँ |
| घनगर्जिनी | भ्र |
| घनरसः | व।वँ |
| घनवर्त्म | ह |
| घनस्मरः | घ |
| घनहारः | घ |
| घना | ए |
| घर्घरध्वनिः | ञ |
| घर्मटी | इ |
| घस्मरा | घ |
| घुरा | भ्र |
| घुर्घुरः | घ |
| घूर्णुकः | ठ |
| घृणा | ऐ |
| घृतम् | व।वँ |
| घोणा | प्राँ |
| घोरः | घ |
| घोरतरः | ऋ |
| घोरदंष्ट्रः | घ |
| घोरनायकः | घ |
| घोरनिस्वना | भ्रीं |
| घोररूपा | उ।ख |
| घोरा | ऋः(अः)।फ।ग।स |
| घोषः | ह |
| घोषा | च |
| घ्राणी | ट |

॥ ङ ॥

| शब्दः | अर्थः |
|---|---|
| ङराट् | ङ |
| ङेनामा | य |

॥ च ॥

| शब्दः | अर्थः |
|---|---|
| चकरः | श |
| चक्रम् | इ।ल |
| चक्रपाणिः | आ।उ।क्लीं |
| चक्रवालुकः | ख |
| चक्रवालुका | ख |
| चक्रभृत् | आ।उ।क्लीं |
| चक्राधारः | हुँ |
| चक्रिणी | च |
| चक्रिबीजम् | द |
| चक्री | आ।उ।क।क्लीं |
| चक्षुः | वौषट् |
| चक्षुषः | '(अं) |
| चञ्चलः | च।भ्र।ट।य।यँ |
| चञ्चला | ध |
| चञ्चलाक्षी | र |
| चञ्चुः | '(अं) |
| चटी | ह्रीं |
| चण्डः | उ।ऊ।औ।ख।ञ।ऐं |
| चण्डभैरवः | औ |
| चण्डभैरवी | औ |
| चण्डमुण्डधरः | च |
| चण्डमुण्डा | ए |

शब्दः अर्थः

चण्डलः—प्र
चण्डवल्लभः—ड
चण्डवारुणः—व
चण्डविक्रमः—च
चण्डा—इ।ग।ङ
चण्डांशुः—म
चण्डिका-आ।औ।:(अः)ठंठं
चण्डिकेश्वरः—ए।ऐ।ऐं
चण्डी-इ।:(अः)।चा।फा।त्रपट्
चण्डीभम्—ह्रां
चण्डीशः—ख।श
चण्डोग्रा—ई
चतुराननः—का।ज।कँ
चतुराननना—ज
चतुर्थाद्यः—त
चतुर्दशी—औ
चतुर्मात्रः—ॐ
चतुर्मुखः—आ।ऐ।का।कँ
चतुर्मूर्त्तिः—छ
चतुष्कलम्—हुँ
चतुष्कलः—हूँ
चतुष्पादः—ॐ
चतुस्तनः—छ
चतुस्तारा—ञ
चत्वरा—ऐ
चन्दनः—घा।चा।छ
चन्दिनी—न
चन्दिरः—ऐ।ॡ।सा।द्रां
चन्द्रः—इ।ई।ऐ।ʼ(अं)।ॡ।च
छा।ला।सा।ऐं।ग्लौं।द्रां

शब्दः अर्थः

चन्द्रकान्तः—ख
चन्द्रघण्टिका—ʼ(अं)
चन्द्रपुरपीठः—:(अः)
चन्द्रपुरी—:(अः)
चन्द्रबीजम्—स्वां।स्वौं
चन्द्रमण्डलम्—ठ
चन्द्रमाः—ऐ।ॡ।ङा।चा।सा।द्रां
चन्द्रयुग्मम्—स्वाहा
चन्द्ररुक्—त
चन्द्ररूपः—च
चन्द्रवसनम्—ऐ
चन्द्रबिम्बम्—ठ
चन्द्रवेगः—च
चन्द्रशेखरः—ए।ग।स।ह
चन्द्राद्याद्यः—क
चन्द्रान्तः—ह
चन्द्रापीड़ः—ए।ग।स।ह
चन्द्रिका—ल।थ
चन्द्री—म
चपला—ड
चरः—ए।च
चरणः—ल
चरमा—ण।प
चरित्रा—च
चरित्रेशी—द
चरुः—घ
चर्म—ए।ऐ।चा।द
चर्मण्यम्—ऐ
चर्मवसनम्—ऐं
चर्मार्णम्—ऐ

शब्दः अर्थः

चलः—च
चलनः—च
चलापकः—ड
चवर्गमः—झ
चापः—ऊ।क
चापबीजम्—घं
चापिनी—ट
चाणूरसूदनः—आ।ड।क्लीं
चामी—थ
चामुण्डा—आ।ए।औ।ʼ(अं)
:(अः)।चा।छ्वा।या।त्र।द्रौं
चामुण्डाबीजम्—च्रीं
चारः—ण
चारणः—ऐ
चारी—छ
चारु—द।छ्रीं
चारुकम्—छ्रौं
चारुहासिनी—ञ
चार्वङ्गी—ऐ।ऐं।छ्रीं
चालकः—इ।च
चालुबाधा—त
चिच्छक्तिः—ओ
चित्—ऐं
चित्कारी—च
चित्तजन्मा—का।क्लीं
चित्ततर्जः—ऋ
चित्तवासिनी—ट
चित्तविद्राविणी—ऐ
चित्ताकर्षिणी—ल
चित्तेन्द्राणी—ऐ

शब्दः — अर्थः

चित्रकूटः—ल

चित्रकोणः—ए

चित्रचारी—च

चित्रधारी—च

चित्रभानुः—म।र।रँ

चित्रमूर्त्तिः—ई

चित्रमूर्तीशः—ई

चित्रवसना—अ

चित्रा—ट

चित्राटीरः—ऐ।ॐ।स।द्राँ

चित्रिणी—इ

चिन्ता—ध

चिन्तामणिः—क।कँ

चिन्तामणिबीजम्—र्क्ष्म्र्य्आं

चिह्नम्—ह्लूँ

चूड़ा—वषट

चूर्णिताबुद्धिः—ञ

चूर्णितासिद्धिः—ञ

चेटिका—उ

चेटी—ह्रीं

चेतनः—च

चेष्टा—य

चैतन्यम्—ह

चैलम्—ह्सौम्

चौरकः—त

॥ छ ॥

छगलण्डः—य

छटाटोपः—छ

छत्रम्—छ

शब्दः — अर्थः

छर्दिनी—फ

छविः—फ।ह।हँ

छागलण्डः—व

छागवाहनः—र।रँ

छान्तः—ज

छाया—ओ।छ

छायाछत्रम्—क्ष

छायामृगधरः—प।ॐ।सा।द्राँ

छिद्रा—भ

छेदनम्—द

छिन्नमस्ता—त्रीं

छिन्ना—ण

छोटिकास्यः—फट्

॥ ज ॥

जगती—ज।ल।लँ

जगत्—ल।न।नमः

जगत्कर्ता—ह्रीं

जगत्पार्श्वः—प

जगत्सारतरः—ल

जगदीशः—आ।उ।क्लीं

जगद्धात्री—ऋ।औ।ड।द

जगद्भावीन्द्रः—व

जगन्नाथः—आ।उ।क्लीं

जगद्बीजम्—ल।स

जगद्भावी—त्र

जगद्योनिः—ऐ

जगद्द्रावी—व

जगन्मयी—ल

जगन्माता—ओ।ञ

शब्दः — अर्थः

जङ्घकः—ए

जङ्घजः—ए

जङ्घा—ए।प

जङ्घिनी—भ

जटा—ऐ

जटाधरः—प।क।ग।स।ह।कँ

जटालः—ज

जटिनी—ठ

जटिलः—त

जटी—त।य।र

जटेशः—ञ

जठरम्—म।ष

जठरगः—म

जठरसंस्थितः—म

जनः—(अं)

जनकः—ज

जनाधिपः—ढ

जनार्दनः—आ।उ।भ।क्लीं

जनेश्वरः—उ

जपजः—ज

जपादिः—फ

जमौजेशः—ष

जम्भादिः—स्त्रीं

जयः—ज।म

जयत्रः—ज

जयदा—ञ

जयन्तः—प।ग।ज।स।ह

जयन्ती—ज़।त

जयन्तीपुरम्—त

जयन्तीप्रदा—आ

शब्दः अर्थः

जयश्रीः—औ।श्रौं
जया—ठ।ल्ह।क।ज।झ।य
जयाननः—क
जयापादः—फ
जयावहः—भ
जयावहा—ज
जयिनी—ग।ठ।थ।प।हस्ल्ङ्यूं
जरा—ख।ट
जराट्—ओ
जरामरः—ख
जरायुरूपिणी—:(अः)
जराहरा—ट
जल्मम्—ऋ।ऋ।क।ठ।व।स स्वाहा
जलकङ्कः—कँा
जलकाङ्क्षः—कँा
जलदा—क्लीं।ब्लीं
जलधिः—रूँ
जलनिधिः—रूँ
जलपीथम्—वा।वँ
जलमन्त्रः—वँ
जलसंज्ञः—वा।वँ
जलस्थितिः—फ
जलात्मा—ख
जलेन्द्रः—वा।वँ
जलेशयः—आ।उ।क्रीं
जलेश्वरः—म
जवनः—ज
जह्नुः—आ।उ।क्रीं

शब्दः अर्थः

जह्नुकन्या—ऌ
जह्नुतनया—ऌ
जह्नुसुता—ऌ
जागरलः—ऌ
जाठरः—म।ल
जाठराग्निः—प
जातकः—त
जातवेदाः—र।रँ
जातिः—ज
जानः—ए
जानुः—ऐ।त
जानुशक्तिः—ए
जापः—ज
जाया—ज
जालन्धरपदाधिपः—ग
जालन्धरी—ठं
जाली—र
जाह्नवी—ऌ
जितामित्रः—आ।उ।क्रीं
जितेन्द्रियः—द
जिनः—आ।उ।घ।क्रीं
जिनवीजम्—घ
जिष्णुः—आ।इ।उ।क्रीं
जिह्वा—ई।ल्ह।ठ।भ।क्रीं
जीमूतः—या।वा।वँ
जीवः—ठ।ल।स।ह
जीवनम्—ठ।व।स।वँ
जीवप्राणौ—ह्सौं
जीवात्मा—ल
जुहूवारः(लः)—र।रँ

शब्दः अर्थः

जृम्भिणी—ण
जेता—ज
जैत्री—इ
जैवातृकः—ऐ।ॐ।स।द्राँ
ज्ञनः—ए
ज्ञसिगः—ञ
ज्ञाता—ऐ
ज्ञानम्—ञ
ज्ञानदः—ग
ज्ञानदा—ञ
ज्ञानपुस्तकधारिणी—ऋ
ज्ञानशक्तिः—ए
ज्ञानामृतम्—ऐ
ज्ञानी—औ।ग।द
ज्या—ज
ज्येष्ठा—आ।घ
ज्योतिः—त्रां
ज्योतिर्मन्त्रः—ॐ।ह्रौं
ज्योतीः—त्रौं।ह्रौं
ज्योतीरूपः—ॐ
ज्योत्स्ना—ल।प
ज्वलनः—र।वा।रँ
ज्वलनसुन्दरी—स्वाहा
ज्वलनाक्षरम्—र
ज्वलिनी—ङ
ज्वाला—औ
ज्वालामाला—इ
ज्वालामालिनी—औ
ज्वालामाली—आ।घ
ज्वालामुखः—च

| शब्दः | अर्थः |
|---|---|
| ज्वालामुखी | इ।ओ |
| ज्वालास्या | ओ |
| ज्वालिनी | आ।ऋ।ओ औ।छ।व |
| ज्वाली | र |

॥ झ ॥

| शब्दः | अर्थः |
|---|---|
| झङ्कारिणी | झ |
| झङ्कारी | घ।झ |
| झञ्झावायुः | झ |
| झण्टी | र।स |
| झण्टीशफा | झ |
| झषः | प |
| झषध्वजः | क्लीं |
| झिण्टिः | ए |
| झिण्टीशः | ए।श |

॥ ञ ॥

| शब्दः | अर्थः |
|---|---|
| ञान्तः | ट |

॥ ट ॥

| शब्दः | अर्थः |
|---|---|
| टङ्कहस्ता | ट |
| टङ्कारः | ट |
| टङ्कारी | ट |
| टादिः | ट।ठ |
| टान्तः | ठ |

॥ ठ ॥

| शब्दः | अर्थः |
|---|---|
| ठङ्कारिणी | ठ |
| ठद्वयम् | स्वाहा |
| ठान्तः | ट।ड |

॥ ड ॥

| शब्दः | अर्थः |
|---|---|
| डकारिणी | झ |
| डड्डुः | उ |
| डमरुः | ख |
| डाकिनी | ओ।औ।ः(अः) ड।फ।ब्लूँ |
| डाकिनीप्रियः | फ |
| डामरः | ड |
| डामरी | ड |
| डिम्भः | हां |

॥ ढ ॥

| शब्दः | अर्थः |
|---|---|
| ढकारिणी | ढ |
| ढक्का | ढ |
| ढलः | ढ |
| ढान्तः | ण |

॥ त ॥

| शब्दः | अर्थः |
|---|---|
| तक्षः | य |
| तक्षकः | च |
| तटम् | हूँ |
| तड़ित् | प |
| तड़िदाभः | त |
| तड़िल्लता | ऐ |
| तत्त्वरश्मिः | स्त्रीं |
| तदादिः | स |
| तनुकान्तः | न |
| तनूनः | ट।य।यँ |
| तनूनपात् | र।रँ |
| तन्द्री | म |
| तपनः | ऋ।ॠ।न।म |
| तपसः | ऐ।ॐ।स।द्रां |
| तपस्तक्षः | इ।ल |
| तमः | औ।त।न।ल।लँ |
| तमिस्रा | ङ।भ |
| तमी | त |
| तमोनुत् | र।रँ |
| तमोबीजम् | त।लँ |
| तमोहरः | ए।ॐ।स।द्रां |
| तरङ्गः | व।प्लूं।वँ |
| तरणिः | ण।म |
| तरन्तः | रूँ |
| तरलः | त |
| तरशक्तिः | ळ |
| तरिः | न |
| तरुणः | ल |
| तर्जनी | ई |
| तलम् | फट् |
| तस्करः | ङ |
| तापनः | म |
| तापिनी | क।ख।ब।भ |
| तामरसम् | व।वँ |
| तामसी | आ।औ।च।त |
| तामालिनी | ऊ |
| तारः | ॠ।ॐ।त।त्राँ |
| तारकम् | त्राँ |
| तारकः | ओ।त।क्ष।ॐ |
| तारत्रयम् | ऐं।ह्रीं।श्रीं |
| तारा | ट।ऊं।त्राँ।त्रों।त्रौं |
| ताराधिपः | ऐ।ॐ।स।द्रां |
| ताराधीशः | ठं |
| तारापतिः | ऐ।ॐ।स।द्रां |
| तारापीड़ः | ऐ।ॐ।स।द्रां |

| शब्दः | अर्थः |
|---|---|
| तारिका—त्राँ | |
| तारिणी—हुँ | |
| तारिधः—रूँ | |
| तारिषः – रूँ | |
| तार्क्ष्यध्वजः—आ।उ।क्लीं | |
| तार्त्तीयः–ह्सौं।ह्सौः।सौं | |
| तालः—घ | |
| तालजङ्घा—ऊ | |
| तिथिप्रणीः–ऐ।ॐ।स।द्राँ | |
| तिथीशः—ॠ | |
| तिमिः—रू | |
| तिमिकोशः—रूँ | |
| तिमिरम्—ल।लँ | |
| तिमिरघ्नी—ॠ | |
| तिरः—उ | |
| तिरस्विनी—अ | |
| तीक्ष्णः—प।य | |
| तीक्ष्णपयोधरः—ठं।ठः | |
| तीक्ष्णा—प | |
| तीरम्—हूं | |
| तीव्रः—प।ओ।ग।त।स।ह | |
| तीव्रज्ञाना—ओ | |
| तीव्रा—ओ | |
| तुङ्गिनायकः—य | |
| तुङ्गी—ऐ।ॐ।स।द्राँ | |
| तुङ्गीपतिः—ऐ।ॐ।स।द्राँ | |
| तुण्डभूषः—त | |
| तुण्डाक्षरः—क | |
| तुम्बुकः—क्ष | |
| तुम्बुरुः—क्ष | |

| शब्दः | अर्थः |
|---|---|
| तुम्बुरुबीजम्—क्ष्म्र्यूं | |
| तुम्बुरुशैवबीजम्—क्ष्म्र्यं | |
| तुरगः—फट् | |
| तुरीयम्—:(अः)।फट् | |
| तुराषाट्—इ।ल | |
| तुर्यः—ध | |
| तुर्यवाणः—ब्लूं | |
| तुला—इ।क | |
| तुषारकिरणः–ऐ।ॐ।स।द्राँ | |
| तुष्टिः—इ।ई।०(अ)।ः।ङ।छ | |
| तूर्यस्वरः—ई | |
| तृट्—ख | |
| तृतीयः—ल | |
| तृतीयकः—व | |
| तृतीयकुलसुन्दरी—ऌ | |
| तृतीयलोचनः—च | |
| तृतीया—इ।ऌ | |
| तृष्णा—ङ | |
| तेजः—ख | |
| तेजसः—औ।कार | |
| तेजोवती—ग | |
| तैजसः—ओ।क।व।रं | |
| तोतला - ॠ।ठ | |
| तोतलाबीजम्—भं | |
| तोमरः—ं(अं)।उ | |
| तोमा—ॐ | |
| तोयम्—ं(अं)।द।ध।व।वँ | |
| तोयनिधिः—रूँ | |
| तोषः—ध | |
| त्रपा—ह्रीं | |

| शब्दः | अर्थः |
|---|---|
| त्रयोदशी—ओ | |
| त्राणात्मा—ञ | |
| त्रासः—ड।ॐ | |
| त्रिकः—ॐ | |
| त्रिकण्टकीबीजम्—ख्रों | |
| त्रिकण्डकी—द | |
| त्रिकूटः—ऌ।ॐ | |
| त्रिकोणः—ए | |
| त्रिगः—ऐ | |
| त्रिगण्डकी—द | |
| त्रिगुणः—ण।ॐ | |
| त्रिगुणाकारः—ण | |
| त्रिगुणात्मा—ॠ | |
| त्रिजटः—त | |
| त्रितत्त्वम् – ॐ।ह्रूं।हुँ।फ्रें | |
| त्रिदशः—क्ष | |
| त्रिदशालयः—क्ष | |
| त्रिदिवः—क्ष | |
| त्रिदिवेशः—क्ष | |
| त्रिदृक्—ध | |
| त्रिदैवतः—ॐ | |
| त्रिधातुः—श | |
| त्रिनेत्रः—घ | |
| त्रिपदा—ॠ | |
| त्रिपात्—आ।उ।क्लीं | |
| त्रिपुटा—ए।ह्रीं।श्रीं।क्लीं | |
| त्रिपुरः—आ।उ।ऐ।ण | |
| त्रिपुरघ्नी—उ | |
| त्रिपुरमालिनी—ब्लू | |
| त्रिपुरसिद्धा—ॠ | |

शब्दः — अर्थः

त्रिपुरसुन्दरी—इ।ए।र
त्रिपुरा—उ।ऐ।ञ
त्रिपुरान्तकः—ए।ग।घ।स।ह
त्रिपुराम्बा—ॠ
त्रिपुरेशी—ऊ
त्रिपुरेश्वरी—आ
त्रिवलिप्रियः—व
त्रिविन्दुः—छ
त्रिमातृका(कः)—ओ
त्रिमात्रः—ॐ
त्रिमात्रा—ऊ।ॠ
त्रिमूर्त्तिः—इ।क्रीं
त्रिमूर्त्तीशः—ई
त्रियात्रकः—ण
त्रिरण्डा—म
त्रिरामी—थ
त्रिरेखः—ण
त्रिलोका—ॠ
त्रिलोकीवश्यकारकः—ख
त्रिलोचनः—ए।ग।च।स।ह
त्रिलोचनप्रियः—भ
त्रिलोचना—:(अः)
त्रिवक्रः—उ
त्रिवर्णा—द
त्रिवर्णिका—उ
त्रिविक्रमः—आ।इ।ॠ।ए।क्रीं
त्रिवृत्—ॐ
त्रिशिखः—ॐ
त्रिशूलः—औ
त्रिशूली—ज

त्रिस्रोताः—ए
त्रैपुरकामबीजम्—ह्स्क्ल्रीं
त्रैपुरवाग्भवम्—ह्स्क्ल्रैं
त्रैपुरशक्तिबीजम्—ह्स्क्ल्रौं
त्रैलोक्यग्रसनात्मकः—क्ष
त्रैलोक्यमोहनः—क्रों
त्रैलोक्यविजया—ओ
त्र्यैलोक्यविद्या—घ।ङ
त्रैलोक्यहर्ता—घ
त्र्यक्षः—ॐ
त्र्यक्षरः—ॐ
त्र्यङ्कः—ॐ
त्र्यम्बकः—ए।ग।स।ह।ॐ
त्र्यर्णः—ॐ
त्र्यैगुण्यः—ॐ
त्वक्—य
त्वरा—ऐ
त्वरिता—ऐ
त्वष्टा—इ।ई।(अं)
त्विषाम्पतिः—म

॥ द ॥

दंष्ट्रिका—छ
दंष्ट्रिणी—:(अः)
दकम्—व।वँ
दक्षकटिः—ट
दक्षकपोलः—ऌ
दक्षकर्णः—उ
दक्षकारः—घ

दक्षकूर्परः—ख
दक्षगण्डः—ऌ
दक्षगतः—ऌ
दक्षगुल्फः—ड।थ
दक्षगुल्मगः—ड
दक्षजङ्घा—ओ।ड
दक्षजा—ठ
दक्षजानुः—ए।ठ
दक्षजान्वग्रगः—ठ
दक्षदारणः—द
दक्षनादः—हं
दक्षनासः—ॠ
दक्षनासाधिपः—थ
दक्षनासिका—इ
दक्षनेत्रम्—इ
दक्षपदाग्रगः—ण
दक्षपादः—ढ।ण।द।स
दक्षपादगः—ट
दक्षपादाङ्गुलः—ट
दक्षपादाङ्गुलिः—ण
दक्षपादाङ्गुलिमूलगः—ढ
दक्षपादादिः—ट
दक्षपादामृतः—स
दक्षपार्श्वः—प।त
दक्षबाहुः—क्ष
दक्षबाहुमूलम्—क
दक्षमखः—ङ
दक्षस्कन्धः—क
दक्षस्फिक्—ट
दक्षहस्तः—श

शब्दः — अर्थः

दक्षहृत्—श
दक्षा—ए।ऐ
दक्षाङ्गुल्यग्रगः—ङ
दक्षास्यः—ट
दक्षिणः—ऋ।क
दक्षिणकूर्परः—ख
दक्षिणबाहुः—क
दक्षिणहस्तगः—श
दक्षिणांशगः—र
दक्षिणाकाली—ठ
दक्षिणाङ्गुलिमूलगः—घ
दक्षिणाङ्गुल्यग्रगः—ङ
दक्षिणी—ञ
दक्षिणोखः—फ
दण्डः—ं(अं)।नमः
दण्डनः—द
दण्डविधायकः—ढ
दण्डिनी—ख
दण्डी—ं(अं)।थ
दण्डीशः—थ
दण्डोदरी—ऌ
दण्ड्यः—ं(अं)
दनुजः—ऌ
दनुजप्रसुः—ऌ
दनुजातीशः—ख
दन्तः—द
दन्तनामा—ॐ
दन्तान्तः—ऐ
दन्तावलः—क्राँ
दन्तिका—घ

घर्ण—घ

दन्तिशीर्षविभेदनः—क्रों
दन्ती—क्राँ
दन्तुरः—द।न
दमा—द
दमुना—रा।रँ
दया—ऋ।जा।द
दर्दुरः—म
दर्पः—हूं
दर्पकः—इ।क।क्लीं
दर्शकः—ओ
दर्शनम्—धा।च
दर्शविपत्—ऐं।ॐ।सा।द्राँ
दशमी—ऌ
दशाश्वः—ऐ।ॐ।सा।द्राँ
दहनः—न।रा।रँ
दाक्षायणी—उ।द
दात्री—द
दानम्—ण।दा।र
दानवेज्यः—व्रोम्
दान्तः—घ।ध
दामोदरः—आ।उ।ऐः।क्लीं
दारकः—ड
दारदः—रूँ
दारुणा—ं(अं)
दावः—रा।रँ
दाशार्हः—आ।उ।क्लीं
दाहः—रा।रँ
दिक्—फ
दिगम्बरः—प।ख।ग।स।ह
दिगम्बरा—ओ।घ

दितिः—ङ।च।ल
दिनकरः—म
दिनमणिः—म
दिनरूपा—ञ
दिवस्पतिः—म
दिवाकरः—प।थ।म
दिवानाथः—क
दिवौका—क्ष
दीनः—द
दीनदः—ध
दीपिका—उ।ऊ।ऋ।प
दीप्तः—म
दीप्ता—रँ
दीप्तिः—ल।भ
दीर्घः—आ।ई।ं(अं)।न
दीर्घघोरणा—उ।ऊ
दीर्घजिह्वा—ल।न
दीर्घतनुच्छदः—हूं
दीर्घद्रोणा—न
दीर्घनासावती—ओ
दीर्घप्रणवः—ओम्
दीर्घबाहुः—छ।फ
दीर्घबाहुकः—च।ज
दीर्घमारुतः—क्राँ
दीर्घमुखी—ऋ।ऋ
दीर्घवक्त्रा—औ
दीर्घवाहा—ज
दीर्घसूः—भ
दीर्घा—आ।इ।ठ।न
दीर्घायुः—ऊ।फ

| शब्दः | अर्थः |
|---|---|

दीर्घास्यवृत्तकः—आ
दीर्घो—आ
दीर्घेशः—ऊ
दुर्गः—ख
दुर्गनिवासिनी—ओ
दुर्गा—आ।ऐ।(अं)।ख।द।ध सा।हं
दुर्गाबीजम्—दुः।दुम्
दुर्द्धरा—ॠ
दुर्भगा—ल
दुली—म
दुश्च्यवनः—इ।ल
दुःखप्रवर्त्तकः—(अं)
दुःखसञ्चयः—:(अः)
दुःखापहारी—(अं)
दृढ़ः—ल
दृश्यकेतुः—प
देवः—च।ट।क्ष
देवकीनन्दनः—आ।उ।क्लीं
देवकीसूनुः—आ।उ।क्लीं
देवतरुः—ऊ
देवताधिपः—इ।ल
देवदेवः—ए।ग।स।ह
देवमाता—ऋ।ॠ
देवराजः—इ।न।ल
देवी—ऋ।फ।ई।ह्रीं
देवीकोटः—च
देवीपीठाधिपः—च
देवीप्रणवः—ह्रीं
देवीबीजम्—स

| शब्दः | अर्थः |
|---|---|

देशः—ष
देहिनी—ल।लँ
दैत्यगुरुः—लँ।व्रौं
दैत्यमान्यः—ल।व्रौं
दैत्यामात्यः—व्रौं
दैत्यारिः—आ।उ।क्लीं
दैवज्ञः—ऋ।ॠ
दोग्घी—ऋ।हूं
दोला—फें
दोषाकरः—ऐ।ॐ।स।द्रां
दौर्गमाता—ॠ
द्युतिः—छ।ञ।क्ष।क्लीं
द्युभङ्गी—ङ
द्युमणिः—म
द्योः—आ।ख।ह।हँ
द्यौः—आ।ख।ह।हँ
द्रावणबाणः—क्लीं
द्राविणी—उ।ग।झ।ञ।ण।द
द्रुघणः—क।कँ
द्रुमः—(अं)।ल
द्रुमारिः—क्षँ
द्रुहिणः—क।कँ
द्लूद्लू—भ
द्वयम्—:(अः)
द्वन्द्वः—ह
द्वादशात्मा—म
द्वारकेशः—आ।उ।क्लीं
द्विजः—ओ।ग
द्विजपतिः—ऐ।ॐ।स।द्रां
द्विजराजः—ऐ।ॐ।स।द्रां

| शब्दः | अर्थः |
|---|---|

द्विजा—ट
द्विजिह्वा—ड
द्विट्स्तम्भनः—ल
द्वितारी—ह्रीं।श्रीं
द्विनदा—ट
द्विनेत्री—ण
द्विपः—क्षाँ।प्रां
द्विपरूपा—आ
द्विपा—ॠ
द्विपेज्यः—क्रों
द्विभुजा—ऊ
द्विमात्रा—ॠ
द्विरण्डः—न।प।भ
द्विरण्डेशः—न।ब।भ
द्विरदः—क्षाँ
द्विरदनः—क्षाँ
द्विरेफः—ण
द्विशीर्षकः—छ
द्विस्वः—छ
द्वीपवान्—रूँ
द्वैमातुरः—गँ

॥ ध ॥

धनम्—फ।घ।र
धनञ्जयः—र।रँ
धनदः—ढ
धनदा—ग
धनार्थः—ध
धनी—घ
धनुः—ट।ॐ
धनुर्धरः—प।ल

